॥ श्रीगणेशायनमः ॥ श्रीदंसदाहंहृदयारविंदेपादारविंदंवरदस्यव[illegible]सदोऽपियस्यस्मरणेनसद्योगीर्वाणवंद्योपमतां
समेति ।१। उदारधीमंदरभूधरेणप्रमथ्यहोरागमासिंधुराजम् । श्राद्[illegible]जः कुरुतेकिलार्यामार्यासपर्याममलोक्तिरत्नैः
। २ । ज्ञानराजगुरुपादपंकजंमानसेखलुविचिंत्यभक्तितः । जातकाभरणनामजातकंजातकज्ञसुखदंविधीयते ॥ ३ ॥
शास्त्रोक्तांयोजन्मपत्रींकरोतिनानाग्रंथालोकनात्तस्यचित्तम् । अत्युद्विग्नंस्यात्ततोजातकेऽस्मिन्कुर्वेव्यक्तांजातकोक्तिंचस
र्वाम् ।४। विचित्रपत्रीकरणादराणांश्रमंविनानुक्रमलेखनार्थम् । समर्थमेतत्प्रकटार्थमेवात्यर्थंततोनामयथार्थमस्य ।५।
सन्मंगलाशीर्वचनान्वितानिपद्यानिचाग्रेसमुदीरयंते । तान्येवपत्रीकरणेप्रवीणाः श्रेयस्कराणिप्रथमंलिखंतु ॥६॥ शुं
डामंडलसंप्रसारकरणैर्मौलिस्थलांदोलनैर्नेत्रोन्मीलनमीलनैरविरलश्रीकर्णतालक्रमैः । दानालिध्वानितैर्विलासचरितै
रूर्ध्वाननोद्गर्जितैर्जातानंदभरः करींद्रवदनोवः श्रेयसेकल्पताम् ।७। पुनः पुनर्मंगलमूर्तिस्मरणंप्रत्यूहव्यूहनिवारणपरमे
वेतिपद्यांतरम् । नानादानविधानयज्ञनिकरैरुग्रैस्तपोभिश्चिरात्प्राप्तेकल्पतरौप्रकल्पितफलावाप्तिः कथंचिद्भवेत् । तूर्णं
यच्चरणांबुजस्मरणतः संपूर्णकामः पुमान्सोयंवोऽभिमतंददातुसततंहेरंबकल्पद्रुमः ।८। सन्मानसावासविलासहंसीक
र्णावतंसीकृतपद्मकोशा । तोषादशेषाभिमतंविशेषादेषापिभाषाभवतांददातु ।९। कल्याणानिदिवामणिःसुललितांकां

॥

तिकलानांनिधिर्लक्ष्मीक्ष्मातनयोबुधश्चबुधतांजीवश्चिरंजीविताम्। साम्राज्यंभृगुजोर्कजोविजयितांराहुर्बहूत्कर्षतांके
तुर्यच्छतुतस्यवांछितमयंपत्रीयदीयोत्तमा १० ननुपूर्वजन्मोपार्जितानांसदसत्कर्मणांपरिपाकोस्मिन्जन्मनि शुभाशुभ
फलावाप्तिकालादेवव्यक्तोऽस्तीतिजातकागमोक्तप्रपंचेनाकिंप्रयोजनमितिचेत्सत्यम् पूर्वोपार्जितकर्मपरिपाकःशुभाशु
भफलोपलब्धिदर्शनादेवज्ञायते परमभीष्टकालेज्ञातुं नशक्यते तथाचभाग्यमग्रेखंडितमखंडितंरिष्टारिष्टभंगोप्यायुर्मा
नमित्यादिज्ञानार्थंजातकागमएवात्यर्थंसमर्थस्तदेकशरणत्वात् तथाहि दिनरात्रिविभागेनसूक्ष्मकालावयवसाधनोपा
यैस्तुर्यध्रुवभ्रमादिविचित्रयंत्रैरुपलक्षितात्तिरुपष्टसमयोपात्तलग्नादिद्वादशराशिचक्रैःस्वोच्चादिगतानांग्रहाणां सदसद
शानुक्रमेणाभीष्टसमयेपिप्राक्कर्मपरिपाकोवगम्यते रिष्टभंगः प्रकृष्टंतुरिष्टस्यापिविनष्टिंविशिनष्टि तद्वदायुर्दायानयन
प्रकारेणवयःप्रमाणस्यचनिर्णयःस्यात् तस्माद्वेदांगत्वेनाधुनिकाभावत्वेनप्रत्ययसिद्धत्वेनापिजातकस्कंधांगीकरणमुचि
तमेवेति। उपार्जितंयत्सदसद्विमिश्रितंजन्मांतरेकर्मनरैरिदानीम् । होरागमस्तस्यविपाकमुच्चैर्दशाक्रमेणप्रकटीकरोति
।११। साक्षाद्भवेद्ब्रह्मयथानिरीक्षणायसुनिर्मलादर्शतलंकिलेदं। शास्त्रंविप[illegible]रिनिधिंप्रततुंतारिस्तथार्थार्जनचारुमित्रम्।१२। ॥१॥
आधानकालेकमलोद्भवेनवर्णानलिप्तंललनलांतराले। याकालिपतापठः [illegible]त्रवित्तांहोरागमज्ञानाविलोचनेन।१३। होराग

मव्योमचरानुसारस्तेषांविचारःसुतरामुदारः। सिद्धांतएवाकलनत[illegible]भ्यासोयदास्याद्गणितद्वयस्य। १४। अपार
होरागमपारगामीपाटयांचबीजेसुतरांप्रगल्भः। सद्गोलविद्याकुशलः[illegible]भवेत्फलादेशविधौसमर्थः॥१५। श्रीजन्मपत्री
शुभदीपकेनव्यक्तंभवेद्धाविफलंसमस्तम्॥ क्षपाप्रदीपेनयथालयस्थंघटादिजातंप्रकटत्वमेति॥१६॥ साजन्मपत्रीवि
मलानयस्यतज्जीवितंसंततमंधकंस्यात्। अनल्पमल्पंचततोल्पकंवानकल्प्यतेभाग्यमतीवहेतोः॥१७॥ जन्मकालति
थिवारतारकाश्चापियोगकरणक्षणाभिधाः॥ मंगलायकिलसंतुपत्रिकायस्यशास्त्रविहिताविरच्यते॥ १८ ॥ येवक्ष्यमा
णाइहराजयोगाराशिप्रभूताअपिनाभसाश्च॥ येकारकाःपूर्णफलंहिपूर्णयच्छंतुपत्रीक्रियतेयदीया॥१९॥ यस्यामले
यंकिलजन्मपत्रीकुतूहलेनक्रियतेयथोक्ता॥ तस्यालयेसत्कमलासलीलंसुनिश्चलातिष्ठतुदीर्घकालम्॥२०॥ कृतंमया
नोदकयंत्रसाधनंनृपक्षणंचापिनशंकुसाधनम्॥ परोपदिष्टात्समयात्प्रयत्नतःशुभाशुभंजन्मफलंमयोच्यते॥ २१॥
अथसांहितिकाभिप्रायेणपंचांगफलानिनिरूप्यंते॥ तत्रादौसंवत्सरफलानि॥ सर्ववस्तुपरिसंग्रहेरतःपुत्रसंततिरतीव
सन्मतिः॥ सर्वभोगयुतदीर्घजीवितोजायतेप्रभवसंभवःपुमान्॥ १ ॥ उत्पन्नभोक्ताप्रियदर्शनश्चबलाधिशालीचतुरः
कलाज्ञः॥ राजाभवेदात्मकुलेसुशीलोविद्वान्मनुष्योविभवाब्दजन्मा॥ २। सदासहर्षोऽतितरामुदारः सत्पुत्रदारोविभ

वःसमेतः ॥ सद्भाग्यविद्याविनयोपपन्नोनूनंपुमान्शुक्लसमुद्भवःस्यात् ।३॥ दातासुतानंदयुतोऽतिकांतःसत्येननित्यंस
हितोगुणीस्यात् ॥ दक्षश्चधूर्तःपरकार्यकर्ताप्रमोदजन्मामनुजोभिमानी ॥४॥ दाराभिमानःसुतरांदयालुःकुलानुवृत्तः
किलचारुशीलः ॥ देवद्विजार्चाभिरतोविनीतोमर्त्यःप्रजाधीशसमुद्भवःस्यात् ॥ ५ ॥ कांतःसुखीभोगयुतश्चमानीप्रिय
प्रवक्ताबहुपुत्रयुक्तः ॥ सुगुप्तबुद्धिःखलुदीर्घजीवीनिरोगिरोवत्सरसंभवःस्यात् ॥ ६ ॥ श्रीमान् प्रतापीबहुशास्त्रवेत्तासुहृ
त्प्रियश्चारुमतिर्बलीयान् ॥ सत्कीर्तियुक्तोनितरामुदारोभवेन्नरःश्रीमुखसंभवोसौ ॥ ७॥ प्रशस्तचेताःसुतरांयशस्वी
गुणान्वितोदानरतोविनीतः ॥ सदासहर्षोऽभिमतोबहूनांभावाभिधानोद्भवमानवःस्यात् ॥ ८ ॥ प्रसन्नमूर्तिर्गुणवान्
विनीतःशांतश्चदानाभिरतोनितांतम् ॥ सुधीश्चिरायुर्दृढदेहशालीजातोयुवाब्दपुरुषःसतोषः ॥ ९ ॥ सर्वलोकगुणगौ
रवयुक्तः सुंदरोऽप्यतितरांगुरुभक्तः। शिल्पशास्त्रकुशलश्चसुशीलोधातृवत्सरभवोहिनरःस्यात्॥ १०॥तत्कालसंजात
महाप्रकोपोहर्षाभियुक्तोगुणवान्प्रतापी । दक्षःकलाकौशलशीलशालीमर्त्योभवेदीश्वरजातजन्मा ॥ ११॥ व्यापारद
क्षःक्षितिपालमानीदानाभिमानीननुशास्त्रवेत्ता ॥ बहुप्रकारैर्बहुधान्यवित्तःस्यान्मानवोवैबहुधान्यजन्मा॥१२॥रथध्वज
छत्रतुरंगमाद्यैर्युतश्चशास्त्राभिरतोऽरिहंता ॥ मंत्रीनरेंद्रस्यनरःश्रुतः ताथिसंवत्सरसंभवःस्यात् ॥१३॥ अत्युग्रकर्मा

भिरतोनितांतमरातिचक्राक्रमणेऽतिदक्षः। शूरश्चधीरातितरामदा[illegible]क्रमीविक्रमवर्षजातः। १४। कार्यप्रलापीकि
लनिंद्यशीलः खलानुयातः परकर्मकर्त्ता। भर्त्ताबहूनांमलिनोऽलसश्चजातोवृषाब्देमनुजोतिलुब्धः। १५। चित्रवस्त्रकुसु
मैकमानसोमानसोद्भवचयान्वितःसदा॥ चारुशीलविलसत्कलान्वितश्चित्रभानुजननोहिपूरुषः।१६। अरालकेशःस
रलःसुकांतिर्जितारिपक्षोमतिमान्विनीतः। प्रसन्नमूर्त्तिर्विलसद्विभूतिःसुभानुसंवत्सरजोनरःस्यात् ।१७। धूर्त्तश्चशूरश्च
पलःकलाज्ञःसुनिष्ठुरोगर्हितकर्मकर्त्ता। उप्तन्नभोक्तादविणेनमर्त्यःस्यात्तारणाब्दोद्भवमानवोयः।१८। स्वधर्मकर्माभि
रतोनितांतसच्छास्त्रपारंगमतामुपेतः॥ कलाकलापेकुशलोविलासीयःपार्थिवाब्देकुलपार्थिवःस्यात् ।१९। सौख्येतिर
क्तोव्यसनाभिभूतोभीतोनकिंचिद्ग्रहणाद्दणीस्यात्। जातःपुमानस्थिरचित्तवृत्तिर्व्ययाभिधानेव्ययकर्मशीलः॥२०॥ रा
जगौरवमहोत्सवःशुचिर्मानवःपृथुतनुर्महीपतिः॥ वैरिवर्गविजयोद्यतःसदासर्वजिच्छरदियस्यसंभवः॥ २१ ॥ भूरिभृ
त्यबहुभोगसंयुतःसुंदरश्चमधुरान्नभुक्सदा। धीरतागुणयुतोतिधारणःसर्वधारिणिचयस्यसंभवः। २२। वक्ताविदेशा
टनतांप्रपन्नःकुटुंबसौख्यापचयोऽतिधूर्त्तः॥ जनेनसाकंगतसख्यवृत्तिर्विरोधिवर्षप्रभवोनरःस्यात्। २३। निर्धनःकिल
करालतांगतोदीर्घपूर्वबहुगर्वसंयुतः॥ चारुबुद्धिरहितोप्यसौहृदोमानवोविकृतिवर्षसंभवः॥ २४॥ कामातुरोधूसरकाय

कांतिःकठोरदीर्घस्वरफल्गुवाक्यः। क्लेशीचलज्जाविधिवर्जितःस्यान्नरःखराब्दप्रभवोतिदीर्घः।२५। तडागवापीगृहकू
पकर्त्तासदान्नदानाभिरुचिःशुचिःस्यात्। विलासिनीनंदनजातहर्षोनरोभवेन्नंदनवर्षजन्मा। २६। संग्रामधीरःसुतरां
सुशीलोभूपालमान्योवदतांवरेण्यः। दातादयालुःकिलवैरिहंतायस्यप्रसूतिर्विजयाभिधाने। २७। शास्त्रप्रसंगेविदु
षांविवादीमान्योवदान्योरिपुगर्वहंता। जयाभिलाषीविषयानुरक्तोजातोजयाब्देमनुजोमहौजाः। २८। भूषाविशेषैः
सहितश्चयोषाविलासशीलोऽमृतवाक्कलाज्ञः। सद्गीतनृत्याभिरतश्चभोक्तायोमन्मथाब्देजननंप्रपन्नः। २९। क्रूरो
हतोनिंद्यमतिश्चलुब्धोवक्रास्यबाहंघ्रिरघप्रियःस्यात्। विरुद्धभावोबहुदुष्टचेष्टोयोहायनेदुर्मुखनाम्निजातः। ३०।
तुरंगहेमांबरधान्यरत्नैर्युतोनितांतंसुतदारसौख्यः। समस्तवस्तुग्रहणैकबुद्धिर्योहेमलंबेपुरुषोभिजातः। ३१। धूर्तो
तिलुब्धोलसतांप्रपन्नःश्लेष्माधिकःसत्वविवर्जितश्च। प्रारब्धकार्योतितरांप्रलापीविलंबसंवत्सरसंभवःस्यात्। ३२।
दुराग्रहीसर्वकलाप्रवीणः सुसंग्रहीचंचलधीश्चधूर्त्तः। अनल्पजल्पःससुहृद्विकल्पोविकारिसंवत्सरजोनरःस्यात्।३३।
वाणिक्क्रियायांकुशलोविलासीनैवानुकूलश्चसुहृज्जनानाम्।अनेकविद्याभ्यसनानुरक्तःसंवत्सरेशार्वरिनाम्निजातः।३४। 
कामीप्रकामंधनवांश्चशश्वत्सेवादरोदारहृतार्थतप्तः॥ सुगुप्तवा[illegible]चपलस्वभावः प्लवाभिधानाब्दभवोनरःस्यात्

॥ ३५ ॥ सौभाग्यविद्याविनयैःसमेतः पुण्यैरगण्यैरपिदीर्घजीवी ॥ स्यान्मानवःसूनुधनोरुसंपद्यस्यप्रसूतिः शुभकृत्स
मासु ॥३६ ॥ सर्वोन्नतश्चारुगुणोदयालुःसत्कर्मकर्त्ताविजयीविशेषात् भा कांतोविनीतःशुभदृक्प्रवीणो यःशोभकृद्वत्स
रसंभवःस्यात् ॥ ३७ ॥ क्रूरेक्षणःक्रूरतरस्वभावःस्त्रीवल्लभःपर्वततुल्यगर्भः ॥ स्यादंतरामःपरकार्यकाले क्रोधीभवेत्क्रो
धिशरत्प्रसूतः ॥ ३८ ॥ सुपुत्रदारःसुतरामुदारोनरःसदाचाररतोऽतिधीरः ॥ मिष्टान्नभुक्सर्वगुणाभिरामो विश्वावसौ
यस्यभवेत्प्रसूतिः ॥ ३९ ॥ धनस्यधान्यस्यचनैवकिंचित्सुसंग्रहोत्यंतकठोरवाक्यः ॥ आचारतालपत्वशठत्वयुक्तो परा
भवेयस्यभवेत्प्रसूतिः । ४० ॥ भवेदलंचंचलचित्तवृत्तिर्नरस्यात्प्रवृतःखलुसाधुकार्ये । धूर्तःसदाचारविचारहीनःप्लवंगजो
वैमनुजःकृशांगः । ४१ । रूपेणमध्यःप्रियवाक्दयालुर्जलाभिलाषीत्वनुवेलमेव । स्थूलांघ्रिसन्मौलिरलंवलीयान्किलारि
कीलःकिलकेप्रसूतः । ४२ । पंडितोहिधनवान्बहुभोगीदेवतातिथिरुचिःशुचिरुच्चैः । सात्विकःकृशकलेवरयष्टिःसौम्यव
त्सरभवोहिनरःस्यात् । ४३ । इतस्ततःसंचलनानुरक्तोलिपिक्रियायांकुशलोविवेकी । क्रोधीशुचिर्भोगनिवृत्तचेताःप्रा
णीतिसाधारणजः प्रणीतः।४४। महेश्वराराधनतत्परःस्यात्क्रोधीविरोधीसततंबहूनाम् । पराङ्मुखस्तातवचस्यतीव
विरोधकृन्नाम्निचयस्यजन्म ।४५। विद्वान्सुशीलश्चकलाप्रवीणःसुधीश्चमान्योवसुधाधिपानाम् । व्यापारसंप्राप्तम

हाप्रातिष्ठःपुमान्भवेद्वैपरिधाविजन्मा ।४६। दुष्टाभिमानीकलहानुरक्तोलुब्धः कुटुंबाभिरतश्चदीनः । स्यादल्पधीर्गर्हि
तकर्मकर्त्ताप्रमादिजन्मामनुजःप्रमादी ।४७। स्याद्भूरिदारश्चतुरोऽतिदक्षःशश्वत्सुतानंदभरप्रपूरः। प्राज्ञःकृतज्ञःसुतरां
विनीतोप्यानंदजातोमनुजोवदान्यः ।४८। क्रूरस्त्वकर्माकलहानुरक्तः संत्यक्तसद्धर्मविचारसारः । दयाविहीनश्चससा
हसोऽपिभवेन्नरोराक्षसजातजन्मा ।४९। सद्बुद्धिशालीजलसस्यसंपद्धश्यानुवृत्तौकुशलःसुशीलः। स्यादल्पवित्तोबहु
पालकश्चजातोनलाब्देचपलोमनुष्यः।५०।पिंगेक्षणोगर्हितकर्मकर्त्तास्यादुद्धतश्चंचलवैभवाढ्यः। त्यागीशठोत्यंतकठो
रवाक्योजातोनरःपिंगलनामधेये । ५१। अनल्पजल्पःप्रियतामुपेतस्त्वसाधुबुद्धिर्विधिनावियुक्तः । कालिप्रसंगेकिल
कालरूपोयःकालयुक्तप्रभवःकृशांगः। ५२। उदारचेताविलसत्प्रसादोरणांगणप्राप्तयशाःसुवेषः। नरेंद्रमंत्रीबहुपूजिता
र्थीसिद्धार्थिजातोमनुजःसमर्थः ॥५३॥ भयंकरःपालयितापशूनांशश्वत्परीवादपरोऽतिधूर्त्तः ॥ जातापकीर्तिःखलचित्त
वृत्तिर्नरोतिरौद्रःखलुरौद्रजन्मा। ५४। स्ववाक्यनिर्वाहमहाभिमानः प्रसन्नताहीनतरोनरःस्यात्। कामीप्रकामंदुरितप्र
वृत्तिर्योदुर्मतिर्दुर्मतिवर्षजातः५५नित्यंनरेंद्रादरगौरवःस्याद्गजाश्वभूहेमसुमान्वितश्चातौर्यत्रिकप्रीतिरतीवजातश्चेन्मा
नवोदुंदुभिनामधेये।५६। आरक्ताक्षःक्वचिदपिमहाकामलाद्यामयानांप्रादुर्भावादतिकृशतनुर्जायतेत्यंतरोषः। पादद्वंद्वे

भवतिकुनखोहस्तयुग्मेथवास्याच्छस्त्राद्दुःखंवजातिरुधिरोद्गारिजन्मामनुष्यः । ५७ । आचारधर्मीभिरतोनितांतंमनोभ
वोत्कर्षतरोनरःस्यात् ॥ अन्याधिकत्वंसहतेनकिंचिद्रक्ताक्षिजातोक्षिरुजान्वितश्च । ५८ । स्याद्दंतरायोहिपरस्यकार्ये
तमोगुणाधिक्यभयंकरश्च । परस्यबुद्धिंप्रहरेत्प्रकामंयोहायनेक्रोधननाम्निजातः । ५९ । उपार्जितार्थव्ययकृन्नितांतंसे
वारतोनिष्ठुरचित्तवृत्तिः ॥ सत्कर्मतालपत्वमनःप्रवृत्तिःक्षयाभिधानेजननंहियस्य ॥ ६० ॥ इतिश्रीदैवज्ञढुंढिराजवि
रचितेजातकाभरणेसंवत्सरफलानि ॥ अथायनफलानि ॥ शश्वत्प्रसन्नोननुसूनुकांतासंतोषयुक्तोतितरांचिरायुः । नरः
सदाचारपरोप्युदारोधीरश्चसौम्यायनजातजन्मा । १ । अखर्वगर्वःकृषिकर्मकर्ताचतुष्पदाढ्योतिकठोरचित्तः । शठोप्य
सह्योननुमानवानांयाम्यायनेनाजननंप्रपन्नः । २ । इत्ययनजातफलम् । अथऋतुफलम् । कंदर्परूपोमतिमान्प्रतापी
सङ्गीतशास्त्रेगणितेप्रवीणः । शास्त्रप्रसूतामलचैलचेतावसंतजन्मामनुजःप्रसन्नः । १ । ऐश्वर्यविद्याधनधान्ययुक्तोवक्ता
प्रलंबामलकेशपाशः । भोगीभवेन्नीरविहारशीलोयोग्रीष्मकालोद्भवतांप्रपन्नः । २ । संग्रामधीरोमतिमान्प्रतापीतुरंगम
प्रेमकरःसुरूपः । कफानिलात्मालल्नाविलासीवर्षोद्भवोवैपुरुषःसहर्षः । ३ । अपूर्णरोषःपुरुषोनिलात्मामानीधनीकर्मरु
चिःशुचिःस्यात् । रणप्रियोवाहनसंयुतश्चऋतौशरन्नाम्निचयस्यजन्म । ४ । नरेंद्रमंत्रीचतुरोप्युदारोनरोभवेच्चारुगुणो

पपन्नः। सत्कर्मधर्मानुरतोमनस्वीहेमंतजातःसततंविनीतः। ५। मिष्टान्नपानानुरतोनितांतंक्षुधान्वितःपुत्रकलत्रसौख्यः। सत्कर्मवेषःपुरुषःसरोषोबलाधिशालीशिशिरर्तुजन्मा। ६। इतिऋतुफलम्। अथमासफलम्। सत्कर्मविद्याविनयोपपन्नोभोगीनरःस्यान्मधुरान्नभोजी। सत्पात्रमित्रानुरतश्चमंत्रीचैत्रोद्भवश्चापिविचित्रमंत्रः। १। सुलक्षणःपुण्यगुणानुशीलःपुमान्बलीयान्द्विजदेवभक्तः। कामीचिरायुर्जलपानशीलःस्यान्माधवेबांधवसौख्ययुक्तः। २। क्षमान्वितश्चंचलचित्तवृत्तिर्विदेशवासाभिरुचिश्चतीव्रः। विचित्रबुद्धिःखलुदीर्घसूत्रोज्येष्ठोद्भवःश्रेष्ठतरोनरःस्यात्। ३। बहुव्ययोनल्पवचोविलासःप्रमादशीलोगुरुवत्सलश्च। सदाग्निमांद्यःशुभकर्मकृत्स्यादाषाढजोगाढतराभिमानः। ४। पुत्रैश्चपौत्रैश्चकलत्रमित्रैःसुखीचतातस्यनिदेशकर्ता। लोकप्रसिद्धःकफवान्वदान्योगुणान्वितःश्रावणमासजन्मा। ५। श्रीमान्भवेत्क्षीणकलेवरश्चदाताचकांतासुतजातसौख्यः। सुखेचदुःखेविकृतोहिमर्त्योभवेन्नरोभाद्रपदात्तजन्मा। ६। विद्वान्धनीराजकुलप्रियश्चसत्कार्यकर्ताबहुभृत्ययुक्तः। दातागुणज्ञोबहुपुत्रसंपत्स्यादाश्विनेश्वादिसमृद्धियुक्तः। ७। सत्कर्मकर्ताबहुवाग्विलासोधनीत्वसत्कुंचितकेशपाशः। कामंसकामःक्रयविक्रयार्थीसत्कृत्यकृत्कार्तिकजातजन्मा। ८। सत्तीर्थयात्रानिरतःसुशीलःकलाकलापेकुशलोविलासी। परोपकर्ताधृतसाधुमार्गोमार्गोद्भवोवैविभवैःसमेतः। ९। परोपकारीपित्

वित्तहीनःकष्टार्जितार्थव्ययकृद्विधिज्ञः। सुगुप्तमंत्रःकृतशास्त्रयत्नःपौषेविशेषात्पुरुषःकृशांगः।१०। सन्मंत्रविद्वैदिकसा
धुयोगीयोगोक्तविद्याभ्यसनानुरक्तः। बुद्धेर्विशेषान्निहतारिसंघोमाघोद्भवःस्यादनघोमनुष्यः।११। परोपकारीकुश
लोदयालुर्बलान्वितःकोमलकायशाली। विलासिनीकेलिविधानशीलोयःफाल्गुनेफल्गुवचोविलासः।१२। क्षेपकः।
विषयहीनमतिःसुचरित्रदृग्विविधतीर्थकरश्चनिरामयः। सकलवल्लभआत्महितंकरःखलुमलिम्लुचमाससभवोनरः।
।१३। इतिमासजातफलम्। ।अथपक्षजातफलम्। । चंचच्चिरायुःसुतरांसुशीलःश्रीपुत्रवान्कोमलकायकां
तिः। सदासदानंदविनीतकालश्चेज्जन्मकालस्तुवलक्षपक्षे। १। प्रतापशीलोविबलश्चलोलःकलिप्रियःस्वीयकुलो
द्भवश्च। मनोभवाधिक्ययुतोनितांतंसितेतरेयस्यनरस्यजन्म।२। इतिपक्षफलम्। अथदिनरात्रिफलम्। तेजस्वीपि
तृसादृश्यश्चारुदृष्टिर्नृपप्रियः॥ बंधुपूज्योधनाढ्यश्चदिवाजातोनरोभवेत्।१। मंददृक्बहुकामार्त्तःक्षयरोगीमलीमसः।
क्रूरात्माछन्नपापश्चनिशिजातोनरोभवेत्।२। इतिदिनरात्रिफलम्। अथतिथिफलम्। बहुजनपरिवारश्चारुविद्योवि
वेकीकनकमणिविभूषावेषशालीसुशीलः। अतिसुललितकांतिर्भूमिपालाप्तवित्तःप्रतिपदियदिसूतिर्जायतेयस्यजंतोः।१
दातादयालुर्गुणवान्सुसंपच्चंचत्सदाचारविचारधन्यः। प्रसन्नमूर्तिर्बहुगीतकीर्तिर्मर्त्योद्वितीयातिथिसंभवःस्यात्।२

कामाधिकःस्यादनवद्यविद्योबलान्वितोराजकुलाप्तवित्तः। प्रवासशीलश्चतुरोविलासीमर्त्यस्तृतीयाप्रभवोऽभिमानी।३।
ऋणप्रवृत्तिर्बहुसाहसःस्याद्रणप्रवीणःकृपणस्वभावः। द्यूतेरतिर्लोलमनामनुष्योवादीयदिस्याज्जननेचतुर्थी।४।संपूर्णगा
त्रश्चकलत्रपुत्रमित्रान्वितोभूतदयान्वितश्च। नरेंद्रमान्यस्तुनरोवदान्यःप्रसूतिकालेकिलपंचमीचेत्।५। सत्यप्रतिज्ञो
धनसूनुसंपद्दीर्घोरुजानुर्मनुजोमहौजाः। प्रकृष्टकीर्तिश्चतुरोवरिष्ठःषष्ठ्यांप्रजातोव्रणकीर्णगात्रः।६। ज्ञानीगुणज्ञोहिवि
शालनेत्रःसत्पात्रदेवार्चनचित्तवृत्तिः। कन्याजनेतापरवित्तहर्तास्यात्सप्तमीजोमनुजोऽरिहंता।७। नानासंपत्सूनुसौ
ख्यःकृपालुःपृथ्वीपालप्राप्तविद्याधिकारः। कांताप्रीतिश्चंचलाचित्तवृत्तिर्यस्याष्टम्यांजन्मचेन्मानवस्य।८। पराङ्मुखो
बंधुजनस्यकार्यैकठोरवाक्यश्चसुधीर्विरोधी। नरःसदाचारगतादरःस्याद्यस्यप्रसूतौनवमीतिथिश्चेत्। ९। धर्मैकबुद्धि
र्भववैभवाढ्यःप्रलंबकंठोबहुशास्त्रपाठी। उदारचित्तोऽतितरांविनीतोरम्यश्चकामीदशमीभवःस्यात् ॥ १०॥ देवद्विजा
र्चाव्रतदानशीलःसुनिर्मलांतःकरणःप्रवीणः। पुण्यैकचित्तोत्तमकर्मकृत्स्यादेकादशीजोऽतिकृशोऽतिरोषः॥ ११॥ जलप्रि
योवैव्यवहारशीलोनिजालयावासविलासशीलः। सदान्नदाताक्षितिपालवित्तःस्याद्द्वादशीजोमनुजःप्रजावान्। १२।
रूपान्वितःसात्विकताविमुक्तःप्रलंबकंठश्चनरप्रसूतिः। नरोऽतिशूरश्चतुरःप्रकामंत्रयोदशीनामतिथौप्रसूतः॥ १३ ॥ क्रू

रोतिशूरश्चतुरःसहासःकंदर्पलीलाकुलचित्तवृत्तिः। स्याद्दुःसहोत्यंतविरुद्धभाषीचतुर्दशीजःपुरुषःसरोषः १४। अतिसु
ललितकायोन्यायसंप्राप्तवित्तोबहुयुवतिसमेतोनित्यसंजातहर्षः। प्रबलतरविलासोत्यंतकारुण्यपुण्योगुणगणपरिपूर्णः
पूर्णिमाजातजन्मा। १५। शांतोमनस्वीपितृमातृभक्तःक्लेशाप्तवित्तश्चगमागमेच्छुः। मान्योजनानांहतकांतिहर्षोदर्शोद्भ
वःस्यात्पुरुषःकृशांगः।१६। इतितिथिजातफलम् ॥ अथवारफलम् । शूरोल्पकेशोविजयीरणाग्रेश्यामारुणाश्चित्तच
यप्रकोपः॥दातामहोत्साहयुतोमहौजादिनेदिनेशस्यभवेन्मनुष्यः ।१। प्राज्ञःप्रशांतःप्रियवाग्विधिज्ञःशश्वन्नरेंद्राश्रयवृ
त्तिवर्ती। सुखेचदुःखेचसमस्वभावोवारेनरःशीतकरस्यजातः।२। वक्रोक्तिरत्यंतरणप्रियःस्यान्नरेंद्रमंत्रीचधरोपजीवी।
सत्वान्वितस्तीव्रतरस्वभावोदिनेभवेन्नाबनिनंदनस्य।३। सद्रूपशालीमृदुवाग्विलासःश्रीमान्कलाकौशलतासमेतः। व
णिक्क्रियायांहिभवेदभिज्ञःप्राज्ञोगुणज्ञोज्ञदिनोद्भवोयः।४। विद्वान्धनीसर्वगुणोपपन्नोमनोरमःक्ष्मापतिलब्धकामः। आ
चार्यवर्यश्चजनप्रियःस्याद्वारेगुरोर्यस्यनरस्यजन्म।५। सुनीलसत्कुंचितकेशपाशःप्रसन्नवेषोमतिमान्विशेषात्। शुक्लां
बरःप्रीतिधरोनरःस्यात्सन्मार्गगोभार्गववारजन्मा।६। अकालसंप्राप्तजराप्रवृत्तिर्बलोज्झितोदुर्बलदेहयष्टिः। तमोगुणी
क्रौर्यचयाभिभूतःशनेर्दिनेजातजनुर्मनुष्यः।७। इतिवारफलम् ॥ अथनक्षत्रफलम् ॥ सदैवसेवाभ्युदितोविनीतःसत्या

न्वितःप्राप्तसमस्तसंपत्। योषाविभूषात्मजभूरितोषःस्याद्श्विनीजन्मनिमानवस्य। १ । सदापकीर्तिर्हिमहापवादैर्ना
नाविनोदैश्चविनीतकालः। जलातिभीरुश्चपलःखलश्चप्राणीप्रणीतोभरणीभजातः।२। क्षुधाधिकःसत्यधनैर्विहीनोवृ
थाटनोत्पन्नमतिःकृतघ्नः। कठोरवाग्गर्हितकर्मकृत्स्याच्चेत्कृत्तिकाजन्मनियस्यजंतोः।३। धर्मकर्मकुशलःकृषीवलश्चारु
शीलविलसत्कलेवरः। वाग्विलासकलिताखिलाशयोरोहिणीभवतियस्यजन्मभम्। ४ । शरासनाभ्यासरतोविनीतः
सदानुरक्तोगुणिनांगणेषु। भोक्तान्नपस्नेहभरेणपूर्णःसन्मार्गवृत्तोमृगजातजन्मा। ५ । क्षुधाधिकोरूक्षशरीरकांतिर्बंधु
प्रियःकोपयुतःकृतघ्नः। प्रसूतिकालेचभवेत्किलार्द्रादयार्द्रचेतानभवेन्मनुष्यः।६। प्रभूतमित्रःकृतशास्त्रयत्नःसद्रत्नचा
मीकरभूषणाढ्यः। दाताप्रतापीवसुधावसुश्चपुनर्वसुर्यस्यभवेत्प्रसूतौ।७। प्रसन्नगात्रःपितृमातृभक्तःस्वधर्मसक्तोवि
नयाभियुक्तः। भवेन्मनुष्यःखलुपुण्यजन्मासन्माननानाधनवाहनाढ्यः।८। वृथाटनःस्याद्तिदुष्टचेष्टःकष्टप्रदश्चापि
वृथाजनानाम्॥ सार्पेसदर्थोहिवृथार्पितार्थःकंदर्पसंतप्तमनामनुष्यः। ९। कठोरचित्तःपितृभक्तियुक्तस्तीव्रस्वभावस्त्वन
वद्यविद्यः॥ चेज्जन्मभंयस्यमघानघःसन्मातिःसदारातिविघातदक्षः॥ १०॥ शूरस्त्यागीसाहसीभूरिभर्ताकामार्त्तोऽपि
स्याच्छिरालोऽतिदक्षः॥ धूर्त्तःक्रूरोऽत्यंतसंजातगर्वःपूर्वाफल्गुन्यस्तिचेज्जन्मकाले॥ ११॥ दातादयालुःसुतरांसुशीलोवि

शालकीर्तिर्नृपतिप्रधानः। धीरोनरोत्यंतमृदुर्नरःस्याच्चेदुत्तराफाल्गुनिकाप्रसूतौ ।१२। दातामनस्वीसुतरांयशस्वीभू
देवदेवार्चनकृत्प्रयत्नः॥ प्रसूतिकालेयदियस्यहस्तोहस्तोदूतातस्यसमस्तसंपत् ॥ १३ ॥ प्रतापसंतापितशत्रुपक्षोनर्ये
तिदक्षश्चविचित्रवासाः॥ प्रसूतिकालेयदियस्याचित्राबुद्धिर्विचित्राखलुतस्यशास्त्रे । १४ । कंदर्परूपःप्रभयासमेतःकां
तापरप्रीतिरतिप्रसन्नः। स्वातीप्रसूतौमनुजस्ययस्यमहीपतिप्राप्तविभूतियुक्तः।१५। सदानुरक्तोग्निसुराक्रियायांधातु
क्रियायामपिचोग्रसौम्यः॥ यस्यप्रसूतौचभवेद्विशाखासखानकस्यापिभवेन्मनुष्यः। १६ । सत्कांतिकीर्तिश्वसदोत्सवः
स्याज्जेतारिपूणांचकलाप्रवीणः। स्यात्संभवेयस्यकिलानुराधासंपाद्विशालाविविधाचतस्य । १७॥ सत्कीर्तिकांतिर्विभु
तासमेतोवित्तान्वितोत्यंतलसत्प्रतापः । श्रेष्ठप्रतिष्ठोवदतांवरिष्ठोज्येष्ठोद्भवःस्यात्पुरुषोविशेषात्।१८। अथमूलवि
चारः। मूलंविरुद्धावयवंसमूलकुलंहरत्येबवदंतिसंतः। चेदन्यथासत्कुरुतेविशेषात्सौभाग्यमायुश्चकुलाभिवृद्धिम्।१९।
ज्येष्ठांत्यघटिकैकाचमूलस्याद्यघटीद्वयम्। अभुक्तमूलमित्युक्तंतत्रोत्पन्नशिशोर्मुखम् ।२०। अष्टवर्षाणिनालोक्यंताते
नशुभमिच्छता। तद्दोषपरिहारार्थंशांतिकंप्रोच्यतेधुना।२१। रत्नैःशतौषधीमूलैःसप्तमृद्भिःप्रपूरयेत्।शतच्छिद्रोघटस्त
स्मान्निःसृतेनजलेनाहि। २२। बालकांबापितृस्नानोविप्रैःसंपादितेसति। जपहोमप्रदानेचकृतेस्यान्मंगलंध्रुवम्। २३।

विरुद्धावयवेमूलेविधिरेवंस्मृतोबुधैः। मुनीनांवचनंसत्यंमंतव्यंक्षेममीप्सुभिः।२४।मूलस्यपादत्रितये क्रमेणापितुर्ज
नन्याश्चधनस्यरिष्टम्। चतुर्थपादःशुभदोनितांतंसार्पेविलोमंपरिकल्पनीयम्।२५।इतिमूलचरणफलम्।कृष्णेतृती
यादशमीवलक्षेभूतोमहीजार्किबुधैःसमेतः।चेज्जन्मकालेकिलयस्यमूलमुन्मूलनंतत्कुरुतेकुलस्य।२६।दिवासायंनि
शिप्रातस्तातस्यमातुलस्यच। पशूनांमित्रवर्गस्यक्रमान्मूलमनिष्टदम्।२७।इतिमूलवेलाफलम्। अथपुरुषाकृतौ
मूलाश्लेषाफलम्। मूर्ध्निपंचमुखेपंचस्कंधयोर्घटिकाष्टकम्। गजाश्चभुजयोर्युग्मंहस्तयोर्हृदयेष्टकम्।२८।युग्मं२
नाभौदिशो १० गुह्येषट् ६ जान्वोःषट्च ६ पादयोः। विन्यस्यपुरुषाकारेमूलस्यफलमादिशेत्।२९।छत्रलाभः
शिरोदेशेवदनेपितृघातनम्। स्कंधयोर्धूवहलंचबाहुयुग्मेत्वकर्मकृत्। ३०।हत्याकरःकरद्वंद्वेराज्याप्तिर्हृदयेभवेत्।अ
ल्पायुर्नाभिदेशेचगुह्येचसुखमद्भुतम्।३१।जंघायांभ्रमणप्रीतिःपादयोर्जीवितात्पता।घटीफलंकिलप्रोक्तंमूलस्यमुनि
पुंगवैः।३२।विज्ञेयंविबुधैःसर्वंसार्पेतच्चविपर्ययात्।इतिपुरुषाकृ०। अथमूलाश्लेषामुहूर्तफलम्।राक्षसोयातुधान
श्चसोमः शुक्रःफणीश्वरः।पितामातायमःकालोविश्वेदेवामहेश्वरः।३३।शर्वाख्यश्चकुबेरश्चशुक्रोमेघोदिवाकरः।गं
धर्वोयमदेवश्चब्रह्माविष्णुर्यमस्तथा।३४।ईश्वरोविष्णुरन्ध्रश्चपवनोमुनयस्तथा।षण्मुखोभृंगिरीटीचगौरीनाम्नीसर

स्वती ।३५। प्रजापतिश्चमूलस्यत्रिंशद्वैक्षणनायकाः। विपरीताः पुनर्ज्ञेयाआश्लेषाजातबालके ।३६। प्रथमेद्वितीयेष
ष्टेचाष्टमेऽष्टादशेतथा। त्रयोविंशेचनवमेकुलक्षयकरः शिशुः। ३७। इतिमूलाश्लेषामुहूर्तफलम्। अथमूलवृक्षफलम् ॥
वेदाः ४ सप्त ७ गजाः ८ काष्ठाः १० खेटा ९ वाणा ५श्चषट् ६ शिवाः ११ । मूलस्तंभस्त्वचःशाखापत्रपुष्पफलंशिखा ।३८।
मूलवृक्षविभागेषुमंगलंहिफलेदले ॥ अमंगलंफलंविद्याच्छेषभागेषुनिश्चितं ।३९। इतिमूलवृक्षफलम्। पादेमुहूर्तेवेला
यांवृक्षेचपुरुषाकृतौ। अनिष्टमशुभाधिक्येशुभाधिक्येशुभंफलम् ।४०। वातस्यजन्मभेयस्यप्रसूतिर्जायतेयदि। तांतं
वाभ्रातरंज्येष्ठंरिष्टंसाकुरुतेध्रुवम् ।४१। मूलवच्छांतिकंतत्रविधेयंहिविचक्षणैः। भूमिरत्नानिहेमान्नंदेयंविप्रेषुभक्तितः।
।४२। सुखेनयुक्तोधनवाहनाढ्योहिंस्त्रोबलाढ्यःस्थिरकर्मकर्त्ता। प्रतापितारातिजनोमनुष्योमूलेकृतीस्याज्जननंप्रपन्नः
।४३। भूयोभूयस्तोयपानानुरक्तोभोक्ताचंचद्वाग्विलासःसुशीलः। नूनंसंपज्जायतेतस्यगाढापूर्वाषाढाजन्मभंयस्यपुंसः। ४४।
दातादयावान्विजयीविनीतःसत्कर्मकर्त्ताविभुतासमेतःकांतासुतावाप्तसुखोनितांतंवैश्वसुवेषः पुरुषोऽभिमानी। ४५।
अतिसुललितकांतिःसंमतःसज्जनानांननुभवतिविनीतश्चारुकीर्तिःसुरूपः। द्विजवरसुरभक्तिर्व्यक्तवाङ्मानवःस्यादभि
जितियदिसूतिर्भूपतिःसस्ववंशे ।४६। शास्त्रानुरक्तोबहुपुत्रमित्रःसत्पात्रभक्तिर्विजितारिपक्षः। प्राणीपुराणश्रवणप्रवीण

इचेजन्मकालश्रवणाहियस्य ।४७।आचारजातादरचारुशीलोधनाधिशालीबलवान्कृपालुः।यस्यप्रसूतौचभवेद्धनिष्ठा
महाप्रतिष्ठासहितोनरःस्यात् ।४८। शीतभीरुरतिसाहसीसदानिष्ठुरोहिचतुरोनरोभवेत्।वैरिणामतिशयेनदारुणोवारु
णोडुयदियस्यसंभवो।४९।जितेंद्रियःसर्वकलासुदक्षोजितारिपक्षःखलुतस्यनित्यम्।भवेन्मनीषामुतरामपूर्वापूर्वायदाभा
द्रपदाप्रसूतौ ।५०। कुलस्यमध्येधिकभूषणंचनात्युच्चदेहःशुभकर्मकर्ता। यस्योत्तराभाद्रपदाचजन्यांधन्यालभेन्मांचभ
वेद्वदान्यः ५१ चारुशीलविभवोजितेंद्रियःसद्धनानुभवनैकमानसः। मानवोननुभवेन्महामतीरेवतीभवतियस्यजन्मभ
म् ।५२। इतिनक्षत्रजातफलानि। अथबृहज्जातकोक्तनवांशफलम्। विनीतोधर्मशीलश्चसत्यवादीदृढव्रतः।विद्याढ्यस
नशीलश्चजायतेप्रथमांशके।१। उत्पन्नविभवोभोक्तासंग्रामेषुपराजितः। गंधर्वप्रमदासक्तोजायतेद्वितीयांशके।२।स्त्री
जितश्चानपत्यश्चमायायुक्तोल्पवीर्यवान् ।वीरविद्याविचारज्ञोजायतेतृतीयांशके।३।बहुस्त्रीसुभगःपूज्योजलसेवीधना
न्वितः। नृपसेव्यथवामात्यश्चतुर्थांशेप्रजायते।४।बहुमित्रजनामात्यो बंधुमित्रसुखान्वितः।महत्प्रतिष्ठामाप्नोतिसंजातः
पंचमांशके। ५। जितवैरिगणोवीरोदृढसौहृदकारकः। जायतेमंडलाधीशोनरःषष्ठांशकोद्भवः।६। अव्याहताज्ञः सर्वत्रपृ
थ्वीनाथः कलायुतः। सेनापतित्वमाप्नोतिसंजातः सप्तमांशके।७। उदारधीःक्षितिख्यातोधनधान्यव्ययोदितःकोपी

दुर्जनतप्तांगोनरोजातोष्टमांशके।८।। इतिबृहज्जातकोक्तनवांशकफलानि। । अथक्रमप्राप्तानिपुरापितृव्यैर्लिखितानि। ।शश्वत्कांतापुत्रमित्रादिसौख्यंस्वातंत्र्यंस्यात्सर्वकार्यप्रसंगे। चंचेद्देहोत्पादनेमानसंचोद्विष्कंभेवैसंभवोयस्यजंतोः।१। वक्ताचंचद्रूपसंपत्तियुक्तोदातात्यंतंस्यात्प्रसन्नाननश्च। जातानंदःसाधिनोद्यप्रसंगाद्धर्मप्रीतिःप्रीतिजन्मामनुष्यः।२। अर्थाप्त्यर्थैसाहसैरन्वितश्चनानास्थानोद्यानयानप्रवृत्तिः। यस्यायुष्मान्संभवेसंभवेद्वैस्यादायुष्मान्मानवामानयुक्तः।३। ज्ञानीधनीसत्यपरायणःस्यादाचारशीलोबलवान्विवेकी। सुश्लाघ्यसौभाग्यविराजमानःसौभाग्यजन्माहिमहाभिमानी।४। सत्वरोतिचतुरःसद्गुणश्चारुगौरवयुतश्चसन्मतिः। नित्यशोभनविधानतत्परःशोभनोभवतिशोभनोद्भवः।५। सदामदोयोगलरुक्सरोषोविशालवक्त्रांघ्रिरतीवधूर्तः। कलिप्रियोदीर्घहनुर्मनुष्यःपाखंडिकःस्यादतिगंडजातः।६। हृष्टःसदासर्वकलाप्रवीणःससाहसोत्साहसमन्वितश्च। परोपकारीसुतरांसुकर्माभवेत्सुकर्मापरिसूतिकाले।७। प्राज्ञोवदान्यःसततंप्रहृष्टःश्रेष्ठःसभायांचपलःसुशीलः। नयेनयुक्तोनियमेनधृत्याधृत्याह्वयेयस्यनरस्यजन्म।८। नरोहरिद्भमयसंयुतश्चसत्कर्मविद्याविनयैर्विरिक्तः। यस्यप्रसूतिर्यदिशूलयोगेशूलव्यथातस्यभवेत्कदाचित्।९। धूर्तःसुहृत्कार्यपराङ्मुखश्चक्लेशीविशेषात्परुषस्वभावः। चेत्संभवेयस्यभवेच्चगंडःप्रचंडकोपःपुरुषःप्रदिष्टः।१०

सुसंग्रहप्रीतिरतीवदक्षोधनान्वितःस्यात्क्रयविक्रयाभ्यां। प्रसूतिकालेयदियस्यवृद्धिर्भाग्याभिवृद्धिर्नियमेनतस्य ।११। निश्चलाहिकमलासदालयेसंभवेच्चवदनेसरस्वती। चारुकीर्तिरपिचेद्ध्रुवंतदाचेद्ध्रुवोभवतियस्यसंभवे ।१२। क्रूरोल्पदृष्टिःकृपयाविहीनोमहाहनुःस्यादपवादवादी। असत्यताप्रीतिरतीवमर्त्योव्याघातजातःखलुघातकर्त्ता ।१३। सुस्निग्धगात्रःकृतशास्त्रयत्नःसुरक्तभूषावसनानुरक्तः। प्रसूतिकालेयदिहर्षणश्चेत्समानवोवैरिपुकर्षणःस्यात् ।१४। सुधीःसुबंधुर्गुणवान्महौजाःसत्यान्वितोरत्नपरीक्षकःस्यात्। चेत्संभवेयस्यचवज्रयोगःसवज्रयुक्तोत्तमभूषणाढ्यः ।१५। उदारचेताश्चतुरःसुशीलःशास्त्रादरःसारविराजमानः। प्रसूतिकालेयदियस्यसिद्धिर्भाग्याभिवृद्धिःसततंहितस्य ।१६। उदारबुद्धिःपितृमातृवाक्येगदार्तमूर्तिश्चकठोरचित्तः। परस्यकार्येव्यतिपाततुल्योनरःखलुस्याद्व्यतिपातजन्मा ।१७। उत्पन्नभोक्ताविनयोपपन्नोद्रव्याल्पतासद्व्ययतासमेतः। सुकर्मसौजन्यतयावरीयान्भवेद्वरीयान्प्रभवेहियस्य ।१८। असत्यसाक्षीप्रतिभूर्बहूनांव्यक्तात्मकर्माक्षमयाविहीनः। दक्षोल्पभक्षोविजितारिपक्षस्त्वधार्षितोवैपरिघोद्भवःस्यात् ।१९। समंत्रशास्त्राभिरतोनितांतंजितेंद्रियश्चारुशरीरयष्टिः। योगःशिवोजन्मनियस्यनंतोःसदाशिवंतस्यशिवप्रसादात् ।२०। जितेंद्रियःसत्यपरोतिगौरःसर्वेषुकार्येष्वतिकोविदश्च। भवेत्प्रसूतौयदिसिद्धियोगःसिद्ध्यंतिकार्याणिकृतानितस्य ।२१।

नूनंविनीतश्चतुरःसुहासःस्वकार्यदक्षोजितशत्रुपक्षः ॥ सन्मंत्रविद्याविधिनैवसर्वैसंसाधयेत्साध्यभवोहिदक्षः । २२ । शु
भप्रचारःशुभवाग्विलासःशुभस्यकर्ताशुभलक्षणश्च ॥ शुभोपदेशंकुरुतेनराणांयस्यप्रसूतौशुभनामयोगः ॥ २३ ॥ जि
तेंद्रियः सत्यवचामहौजावाग्वादसंग्रामजयाभ्युपेतः ॥ सन्मानशुक्लांबरधारणेच्छुःशुक्लोद्भवोवैभवसंयुतःस्यात् ॥ २४ ॥
विद्याभ्यासेप्रीतिरत्यंतचेतानित्यंसत्याचारजातादरश्च । शांतोदांतोजायतेचारुकर्माब्रह्मायोगःसंभवेयस्यपुंसः । २५ ।
प्राज्ञोबलीयान्विपुलामलश्रीयुक्तःकफात्माहिभवेन्महौजाः । निजान्वयेवैमनुजोनरेंद्रस्त्वैंद्रोद्भवश्चारुतरप्रभावः । २६ ।
चंचलश्चकुटिलःखलमैत्रःशास्त्रभक्तिरहितोहृतचित्तः । साध्वसेमनसितस्यनोधृतिर्वैधृतिर्भवतियस्यजन्मनि ॥ २७ ॥
इतियोगफलानि ॥ ॥ अथकरणफलम् ॥ कामीदयालुर्बलवान्सुशीलोविचक्षणः शीघ्रगतिः सभाग्यः ॥ बवाभिधाने
जननंहियस्यनानाविधातस्यभवेत्सुसंपत् ॥ १ ॥ शूरतातिविलसद्बलवत्तासंयुतोभवतिचारुविलासः । काव्यकृद्धितरण
प्रणयश्चेद्बालवेमलमतिश्चकलाज्ञः । २ । कामीप्रगल्भोऽभिमतोबहूनांनूनंस्वतंत्रोबहुमित्रसौख्यः ॥ बलान्वितः कोम
लवाग्विलासः श्रेष्ठःकुलेकौलवजातजन्मा । ३ । चारुकोमलकलेवरशालीकिल्बिलालसमनाश्चकलाज्ञः ॥ वाग्विलासकु
शलोऽतिसुशीलस्तैतिलेविमलधीश्चलदृक्स्यात् । ४ । परोपकारेविहितादरश्चाविचारसारश्चतुरोजितारिः । शूरोऽति

धीरः सुतरामुदारो गरे नरश्चारुकलेवरश्च ॥५॥ कलाप्रवीणः सुतरां सहासः प्राज्ञो हि सन्मानसमन्वितश्च ॥ प्रसूतिकाले व
णिजां हि यस्य वाणिज्यतोर्थागमनं हितस्य ।६। चारुवक्रचपलो बलशाली हेलया सिदरितारिकुलश्च ॥ जायते खलमति
र्बहुनिद्रा यस्य जन्मसमये खलु भद्रा ॥ ७ ॥ अतिसुललितबुद्धिर्मंत्रविद्याविधाने गुणगणसमवेतः सर्वदा सावधानः । ननु
जनकृतसख्यः सर्वसौभाग्ययुक्तो भवति शकुनजन्मा शाकुनज्ञानशीलः ॥ ८ ॥ नरः सदाचारपराङ्मुखः स्यादसंग्रहः क्षी
णशरीरयष्टिः । चतुष्पदे यस्य भवेत्प्रसूतिश्चतुष्पदात्सत्वयुतो मनुष्यः । ९ । दुःशीलवक्रचलनो बलवान्खलात्मा कोपान
लाहतमतिः कलिकृत्कुलार्यैः । द्रोहात्कुलक्षयमवादतिदीर्घकाले जातो हि नागकरणे रणरंगधीरः ॥ १० ॥ धर्मेऽप्यधर्मे सम
तामतेः स्याद्गेऽप्यनंगो विबलत्वमुच्चैः । मैत्र्याममैत्र्यां स्थिरता न किंचित्किंस्तुघ्नजातस्य हि मानवस्य । ११ । इति करण
फलम् । अथ गंडांतफलम् । पौष्णादिगंडांतभवो हि मर्त्यः क्रमेण पित्रोरशुभोऽग्रजस्य । जातस्य सत्यं विविधे प्रजातः सर्वा
भिघातं कुरुते वदंति ॥ १ ॥ इति गंडांतफलम् । अथ गणफलम् । सुस्वरश्च सरलोक्तिमतिः स्यादल्पभोजनकरो हि नरश्च ।
जायते सुरगणेऽन्यगुणज्ञः सुज्ञवर्णितगुणो द्रविणाढ्यः ॥ १ ॥ देवद्विजार्चाभिरतोऽभिमानी धनी दयालुर्बलवान्कलाज्ञः । प्रा
ज्ञः सुकांतिः सुखदो बहूनां मर्त्यो भवेन्मर्त्यगणे प्रसूतः ।२। अनल्पजल्पश्च कठोरचित्तः स्यात्साहसी क्रोधपरोद्धतश्च । दुः

शीलवृतःकलिकृद्बलीयान्रक्षोगणोत्पन्ननरोविरोधी ।३। अथलग्नफलं । चंडाभिमानीगुणवान्सकोपःसुहृद्विरोधीचसखा
परेषां।पराक्रमप्राप्तयशोविशेषोमेषोदयेयःपुरुषोऽतिरोषः १।गुणाग्रणीःस्याद्द्रविणेनपूर्णोभक्तोगुरूणांहरणप्रियश्च।
धीरश्चशूरःप्रियवाक्प्रशांतःस्यात्पूरुषोयस्यवृषेविलग्ने ।२। भोगीवदान्योबहुपुत्रमित्रःसुगूढमंत्रःसधनःसुशीलः॥ तस्य
स्थितिःस्यान्नृपसन्निधानेलग्नेभवेन्नामिथुनाभिधाने ।३। मिष्टान्नभुक्साधुरतोविनीतोविलोमबुद्धिर्जलकेलिशीलः। प्र
कृष्टसारोऽतितरामुदारोलग्नेकुलीरेहिनरोभवेत्सः।४।कृशोदरश्चारुपराक्रमश्चभोगीभवेदल्पसुतोल्पभक्षः। संजातबुद्धिर्म
नुजोऽभिमानेपंचाननेसंजननेविलग्ने ।५। कामक्रीडासद्गुणज्ञानसत्वकौशल्याद्यैःसंयुतःसुप्रसन्नः।लग्नंकन्यायस्यजन्यां
सधन्यांकन्यांक्षीराब्धेरवाप्नोतिनित्यम् । ६ । गुणाधिकत्वंद्रविणोपलब्धिर्वाणिज्यकर्मण्यतिनैपुणत्वम्। पद्मालयात
न्निलयेनलोलालग्नंतुलाचेत्सकुलावतंसः ।७। शूरोनरोऽत्यंतविचारसारोनवद्यविद्याधिकतासमेतः। प्रसूतिकालेकि
ललग्नशालीभवेदलिस्तस्यकलिःसदैव ।८। प्राज्ञश्चराज्ञःपरिसेवनज्ञःसत्यप्रतिज्ञःसुतरांमनोज्ञः। सुज्ञःकलाज्ञश्चध
नुर्विधिज्ञश्चेन्नुर्धनुर्यस्यजनुस्तनुःस्यात् ।९। कठिनमूर्तिरतीवशठःपुमान्निजमनोगतवद्बहुसंततिः।सुचतुरोऽपिचलु
ब्धतरोवरोयादिनरोमकरोदयसंभवः।१०।लोलस्वांतोऽत्यंतसंजातकामश्चंचद्देहःस्नेहकृन्मित्रवर्गःसस्यैरभःसंभवैर्युक्स

दंभश्चेत्स्यात्कुंभेसंभवीयस्थलग्ने। ११ ।दक्षोल्पभक्षोल्पमनोभवश्चसद्रत्नहेमाचपलोतिधूर्तः। स्यान्नाचनानारचना
विधानमीनाऽभिधानेजननेविलग्ने ।१२। भवेदलंलग्नबलंयथोक्तंविलग्नकालेप्रबलेप्रसूतौ। तस्मिन्बलोनेयदिवाविल
ग्नेयुक्तेक्षितेक्रूरखगैस्तथाल्पम् । १३ । नन्वेवमुदाहृतानांसंवत्सरादिफलानांसमय.नियमाभावात् ।निराधारकत्वेन
फलादेशःकथंसम्यक्घटतीतिव्यर्थमेवकिमर्थमुक्तमितिचेन्न समयनियमोप्यस्ति तथाहि उक्तानिसंवत्सरपूर्वकाणां
फलानितत्प्राप्तिरितिप्रकल्प्या ।सांवत्सरंसावनवर्षपस्यपाकेयनंतुप्रभवंस्वरांशोः ।१४। मासोद्भवंमासपतेस्तथैवदोर्ग
णोडुपक्षप्रभवंचयत्स्यात्।तिथिप्रभूतंकरणोद्भवंचचंद्रांतरेऽर्कस्यदशाविभागे ।१५। वारोद्भवंवारविभोर्विचिंत्यंयोगो
त्थमिद्धर्क्षबलान्वितस्य।लग्नोद्भवंलग्नपतेर्दशायांदृग्भावयुक्राशिजमेवमूह्यम्।१६।इतिलग्नफलम् । अथसूर्यनक्ष
त्रफलम्।डिंभाख्यचक्रेरविभाच्चभानांत्रयंन्यसेन्मूर्ध्निमुखेत्रयंच।द्वेस्कंधयोर्द्वेभुजयोर्द्वयंचपाणिद्वयेवक्षसिपंचभानि।१।
नाभौचलिंगेचतथैकमेकंजान्वोर्द्वयंपादयुगेभषट्कं।पुंसांसदावैपरिकल्पनीयंमुनिप्रवर्यैःफलमुक्तमत्र। २ । सद्रत्नचामी
करचारुवस्त्रविचित्रवालव्यजनातपत्रैः।विराजमानोमनुजोनितांतंमौलिस्थलेभंनलिनीप्रभोश्चेत्। ३ ।मिष्टाशनानां
शयनासनानांभोक्ताचवक्तासततंप्रसन्नः।स्मिताननोनावदनानुयातंभानोर्भवेद्भंजननेहियस्य। ४ । वृषांसकोवंशावि

भूषणश्चमहोत्सवार्थप्रथितःप्रतापी।नरोऽतिशूरोऽतितरामुदारोदिवाकरोडुस्थितमंशकेचेत् ।५। त्यक्तस्वदेशःपुरुषोविशेषाद्वौद्धतःशौर्ययुतोनितांतम्।विदेशवासाक्षमहत्प्रतिष्ठोमार्त्तंडभंबाहुगतंप्रसूतौ।६।वदान्यतासद्गुणवर्जितश्चपण्यादिरत्नादिपरीक्षकश्च। सत्यानृताभ्यांसहितोहिमर्त्योदिवामणेर्भंयदिपाणिसंस्थम् ।७। भूपालतुल्यःस्वकुलेसुशीलोवालोविशालोत्तमकीर्तिशाली। शास्त्रेप्रवीणःपरिसूतिकालेवक्षस्थलेचेन्नलिनीशभंस्यात्।८।क्षमासमेतोरणकर्मभीरुःकलाकलापाकलनैकशीलः ।धर्मप्रवृत्तिःसुतरामुदारोनाभीसरोजेंबुजबंधुताराः ।९। कंदर्पधुर्योजितसाधुकर्मासद्गीतनृत्याभिरुचिःकलाज्ञः॥ चेज्जन्मकालेनलिनीशभंस्याद्गुह्यस्थलेसोतुलकीर्तियुक्तः।१०।नानादेशानेकधासंप्रचारःकार्योत्साहश्चंचलक्षामगात्रः। धूर्तोमर्त्यःसत्यहीनश्चनूनंजानुस्थानेभानुभंजन्मनिस्यात्।११।कृषिक्रियायांनिरतोल्पधर्मःशत्रूज्झितःसेवनकर्मकर्ता। तारायदिस्यादरविंदबंधोःपादारविंदेचनरस्यसूतौ ।१२। इतिसूर्यनक्षत्रफलम्। अथावयवस्वरूपम्। ह्रस्वामीनवृषाजघटामिथुनधनुःकर्किमृगमुखाश्चसमाः। वृश्चिककन्यामृगपतिवणिजादीर्घाः समाख्याताः ।१।एभिर्लग्नादिगण्यैःशीर्षप्रभृतिनृशरीराणि॥ सदृशानिविजायंतेस्थितगगनचरैश्चैवतुल्यानि ।२। इदंलग्नतःसकाशात्कालपुरुषाकारचक्रंद्रष्टव्यम्। अथद्वादशभावानांफलानि। भिन्नंद्वादशधाविधायविलसच्चक्रंचतत्रन्यसेल्लग्नाद्वादश

राशयोऽतिविशदावामांगमार्गक्रमात्। अंक्यास्तत्रनभश्चराःस्फुटतराराशौचयत्रस्थितास्तेभ्यःसाधुफलंत्वसाधुसुधि
यावाच्यंहिहोरागमात्।१। रूपंतथावर्णविनिर्णयश्च चिन्हानिजातिर्वयसःप्रमाणम् । सुखानिदुःखान्यपिसाहसंचलग्ने
विलोक्यंखलुसर्वमेतत् ।२। विलोकितेसर्वखगैर्विलग्नेलीलाविलासैःसहितोबलीयान् । कुलेनृपालोविपुलायुरेवमये
नमुक्तोऽरिकुलस्यहंता।३। सौम्यास्त्रयोलग्नगतायदिस्युःकुर्वंतिजातंनृपतिंविनीतम् । पापास्त्रयोदुःखदरिद्रशोकैर्युतंनि
तांतंबहुभक्षकंच।४। लग्नाद्व्ययनषडष्टकेऽपिचशुभाःपापैर्नयुक्तेक्षितामंत्रीदंडपतिःक्षितेरधिपतिःस्त्रीणांबहूनांपतिः। दी
र्घायुर्गदवर्जितोगतभयःसौंदर्यसख्यान्वितःसच्छीलोयवनेश्वरैर्निगदितोमर्त्यःप्रसन्नःसदा।५। अथार्कादिग्रहाणांहिगु
णवर्णविनिर्णयः। आकारोपिशरीरस्यप्रोच्यतेमुनिसंमतः।६। शूरोगभीरश्चतुरःसुरूपःश्यामारुणश्चाल्पककुंतलश्च।
सुवृत्तगात्रोमधुपिंगनेत्रोमित्रोहिपित्तास्थ्यधिकोनतुंगः॥ ७ ॥ सद्वाग्विलासोमलधीःसुकायोरक्ताधिकःकुंचितकृष्णके
शः। कफाऽनिलात्माबुजपत्रनेत्रोनक्षत्रनाथः सुभगोऽतिगौरः।८। मज्जासारोरक्तगौरोत्युदारोहिंस्रःशूरःपैत्तिकस्ताम
सश्च। चंडःपिंगाक्षोयुवाखर्वगर्वः खर्वश्चोर्वीसूनुरग्निप्रभःस्यात्।९। श्यामःशिरालश्चकलाविधिज्ञःकुतूहलीकोमलवा
क्त्रिदोषी। रजोऽधिकोमध्यमरूपधृक्स्यादाताम्रनेत्रोद्विजराजपुत्रः।१०। ह्रस्वाकारश्चारुचामीकराभः सम्यक्सारः

सुस्वरोदारबुद्धिः । दक्षःपिंगाक्षःकफीचातिमांसःप्राज्ञैःसुज्ञैःकीर्तितोजीवसंज्ञः । ११ । सजलजलदनीलःश्लेष्मलश्चा
निलात्माकुवलयदलनेत्रोवक्रनीलालकश्च । सुसरलभुजशालीराजसश्चातिकामीमदयुतगजगामीभार्गवःशुक्रसारः ।
।१२। श्यामलोतिमलिनश्चशिरालःसालसश्चजटिलःकृशदीर्घः । स्थूलदंतनखपिंगटनेत्रोयुक्शनिश्चखलतानिलको
पैः । १३ । लग्नस्यनंदांशपतेर्हिमूर्त्यामूर्तिःसमानाबलशालिनोवा । स्यादिंदुनंदांशपतेस्तुवर्णःपरंविचार्याःकुलजातिदे
शाः । १४ । सत्वंभवेयुःशशिसूर्यजीवास्तमोयमारौचरजोज्ञशुक्रौ । त्रिंशल्लवेयस्यगतोदिनेशोवाच्योगुणस्तस्यखगस्य
नूनम् ।१५। शिरोक्षिणीकर्णनसाकपोलौहनुर्मुखंचप्रथमद्रृकाणे । कंठांसदोर्दंडककुक्षिवक्षःक्रोडंचनाभिस्त्रिलवेद्वितीये
।१६। बस्तिस्ततोलिंगगुदेतथांडावूरूचजानूचरणौतृतीये । क्रमेणलग्नात्परपूर्वषट्कैवामंतथादक्षिणमंगमत्र । १७ ।
मत्स्यंतिलंलक्ष्मबलानुसारंकुर्वंतिसौम्याव्रणमत्रपापाः । स्वांशस्वभागस्थिरगाश्चलक्ष्मयुक्तेक्षिताःसौम्यनभश्चरेंद्रैः
१८। रवेर्व्रणःकाष्ठचतुष्पदोत्थःशृंग्यंबुचारिप्रभवःशशांकात् । कुजाद्विषाग्न्यस्त्रकृतश्चचांद्रेर्भौमःशनेश्चापिमरुद्दृष
द्भ्याम् । १९ । कुर्याद्व्रणंक्रूरखगोरिपुस्थोयुक्तःशुभैर्लक्ष्मतिलंचदृष्टः । गृहत्रयंयत्रबुधान्वितंस्यात्तत्रव्रणोंगेखलुराशि
तुल्यः । २० । मेषेशशांकःकलशेशनिश्चेद्भानुर्धनुस्थश्चभृगुर्मृगस्थः । तातस्यवित्तंनकदापिभुंक्तेस्वबाहुवीर्येणनरोवरे

ण्यः।२१। चतुर्षुकेंद्रेषुभवंतिपापावित्तस्थिताश्चापिचपापखेटाः। नरोदरिद्रोतितरांनिरुक्तोभयंकरश्चात्मकुलोद्भवाना
म्।२२। सुतास्थितोवायदिमूर्त्तिवर्तीबृहस्पतीराज्यगतःशशांकः। नरस्तपस्वीविजितेंद्रियश्चस्याद्राजसोबाद्धिविराज
मानः।२३। कन्यायांचतुलाधरेसुरगुरुर्मेषेवृषेवाभृगुः सौम्योवृश्चिकराशिगः शुभखगैर्दृष्टःकुलश्रेष्ठताम्॥ नूनंयाति
नरोविचारचतुरोऽप्यौदार्यजःतादरोनित्यानंदभरोगुणैर्वरतरोनिष्ठापरोवित्तवान्।२४।षष्ठेससौरोभवतोबुधारौनरोभ
वेच्चौर्यपरोनितांतम्। स्वकर्मसामर्थ्यविधेर्विशेषात्परांघ्रिपाणीन्कुगुणीछिनत्ति।२५। प्रसूतिकालेकिलयस्यजंतोःकर्के
र्कजश्चेन्मकरेमहीजः। चौर्यप्रसंगाद्भवचंडदंडाच्छाखादिखंडानिभवंतिनूनम्।२६। कुंभेचमीनेमिथुनाभिधानेशरास
नेस्युर्यदिपापखेटाः। कुचेष्टितःस्यात्पुरुषोनितांतंवज्रेणनूनंनिधनंहितस्य।२७। यस्यप्रसूतौखलुनैधनस्थः सौम्यग्र
हःसौम्यनिरीक्षितश्च। तीर्थान्यनेकानिभवंतितस्यनरस्यसम्यङ्मतिसंयुतस्य।२८। बुधात्रिभागेनयुतेविलग्नेकेंद्रस्थ
चंद्रेणनिरीक्षितश्च। शिष्टान्वयेयद्यपिजातजन्मास्यान्नीचकर्मामनुजःप्रकामम्।२९।भानौद्वितीयेभवनेशनिश्चेन्निशी
थिनीशोगगनाश्रितश्च। भूनंदनेवैमदनेतदानींस्यान्मानवोहीनकलेवरःसः।३०। पापांतरालेचभवेत्कलावांस्तथार्कसू
नुर्मदनालयस्थः। कलेवरंस्याद्विकलंचतस्यश्वासक्षयप्लीहकगुल्मरोगैः।३१। शशीदिनेशस्ययदानवांशेभवेद्दिनेशःश

शिनोनवांशे। एकत्रसंस्थौयदितौभवेतांलक्ष्मीविहीनोमनुजःसनूनम्।३२। व्ययेरिभावेनिधनेधनेचनिशाकरार्कशनैश्चराःस्युः। बलान्वितास्तेत्वनिलाधिकत्वात्तेजोविहीनेनयनेप्रकुर्युः।३३। पापास्त्रिपुत्रायगताभवंतिविलोकितानैवशुभैर्नभोगः। कुर्वंतितेकर्णविनाशनंचजामित्रयाताःखलुकर्मघातम्। ३४। धनव्ययस्थानगतश्चशुक्रोवक्रोऽथवाकर्णरुजंकरोति। नक्षत्रनाथोयदितत्रसंस्थोदृक्दोषकारीकथितोमुनींद्रैः।३५। एतेहियोगाःकथितामुनींद्रैःसांद्रंबलंयस्यनभश्चरस्य॥ कल्प्यंफलंतस्यचपाककालेसुनिर्मलायस्यमतिस्तुतेन ॥३६॥ इतिजातकाभरणेतनुभावः॥ अथधनभावः॥ स्वर्णादिधातुक्रयविक्रयश्चरत्नादिकोशोपिचसंग्रहश्च।एतत्समस्तंपरिचिंतनीयंधनाभिधानेभवनेसुधीभिः।१। भानुभूतनयभानुतनूजैश्चेद्धनस्यभवनंयुतदृष्टम्। जायतेहिमनुजोधनहीनःकिंपुनःक्षशशीक्षितयुक्तम्।२।धनालयस्थौकिलमंगलेंदूदृग्दोषदौमंदविलोकनेन। शनिर्धनस्थानगतःकरोतिधनाभिवृद्धिंचबुधेनदृष्टः।३।धनेदिनेशोतिधनानिनूनंकरोतिमंदेननचेक्षितश्च। शुभाभिधानाधनभावसंस्थानानाधनाभ्यागमनानिकुर्युः।४। गीर्वाणवंद्योद्रविणोपयातःसौम्येक्षितश्चेद्द्रविणंकरोति। सोमेनदृष्टोधनभावसंस्थःसोमस्यसूनुर्धनहानिदःस्यात्।५। धनस्थितोज्ञेनविलोकितश्चक्षशशांकोऽपिधनादिकानाम्। पूर्वार्जितानांकुरुतेविनाशंनवीनवित्तप्रतिबंधनंचा६। वित्तस्थितोदैत्यगुरुःकरोतिवित्तागमं

सोमसुतेनदृष्टः। सएवसौम्यग्रहयुक्तदृष्टःप्रकृष्टवित्ताप्तिकरोनराणाम्। इतिधनभावः। अथसहजभावः। सहोदराणा
मथाकिंकराणांपराक्रमाणामुपजीविनांच। विचारणाजातकशास्त्रविद्भिस्तृतीयभावेनियमेनकार्या।१। पापालयंचेत्सह
जंसमस्तैःपापैःसमेतंप्रविलोकितंच। भवेदभावःसहजोपलब्धेस्तद्वैपरीत्येनतदाप्तिरेव।२। क्षेपकः। "अग्रेजातंरवि
र्हंतिपृष्ठेजातंशनैश्चरः। अग्रजंपृष्ठजंहंतिसहजस्थोधरासुतः"।३। नवांशकायेसहजालयस्थाःकलानिधिक्षोणिसुतप्र
दिष्टाः। तावन्मितास्युःसहजाभगिन्यस्त्वन्येक्षितावैपरिकल्पनीयाः।४। कुजेनदृष्टेरविजेऽनुजस्थेनश्यंतिजाताःस
हजास्तुतस्य। दृष्टेचतस्मिन्गुरुभार्गवाभ्यांशश्वच्छुभंस्यादनुजेपुनूनम्।५। सौम्येनभूमीतनयेनदृष्टःकरोतिनाशंरवि
जोनुजानाम्। शशांकवर्गेसहजेकुजेनदृष्टेसरोगाःसहजाभवेयुः॥६॥ दिवामणौपुण्यगृहेस्वगेहे संदेहएवानुजजीवित
स्य। एकःकदाचिच्चिरजीवितश्चभ्राताभवेद्भूपतिनासमेतः।७। चंद्रमायदिपापानांत्रितयेनप्रदृश्यते। भ्रातृनाशोभवे
त्तस्ययदिनोवीक्षितःशुभैः।८। इतिसहजभावः। अथसुहृद्भावः। सुहृद्गृहग्रामचतुष्पादानांक्षेत्रोद्यमालोकनकंचतुर्थे।
दृष्टेशुभानांशुभयोगतोवाभवेत्प्रभूतिर्नियमेनतेषाम्।१। लग्नेचैवयदाजीवोधनेसौरिश्चसंस्थितः। सप्तमेभवनेपापःप
रिवारक्षयंकरः।२। पापैस्त्रिभिश्चंद्रमासिप्रदृष्टेस्यान्माननाशःशुभदृष्टिहीने। व्ययास्तलग्नेष्वशुभाःस्थिताश्चेत्कुर्वं

तितेवैपरिवारनाशम्। ३ ।शनिर्धनेसंजननेयदिस्याल्लग्नेविलग्नःसुरराजमंत्री। सिंहीसुतः सप्तमभावयातोजातस्य जंतोर्जननीनजीवेत्।४। इतिसुहृद्भावः।अथसुतभावः। बुद्धिप्रबंधात्मजमंत्रविद्याविनेयगर्भस्थितिनीतिसंस्थम्। सुताभिधानेभवनेनराणांहोरागमज्ञैःपरिचिंतनीयम्।१।लग्नेद्वितीयेयदिवातृतीयेविलग्ननाथेप्रथमःसुतःस्यात्॥ तुर्यस्थितेस्मिंश्चसुतोद्वितीयःपुत्रीसुतोवेतिपुरःप्रकल्प्यम्।२। सुताभिधानंभवनंशुभानांयोगेनदृष्ट्यासहितंविलोक्य। संतानयोगंप्रवदेन्मनीषीविपर्ययत्वेहिविपर्ययःस्यात्।३। संतानभावोनिजनाथदृष्टःसंतानलब्धिंशुभदृष्टयुक्तः। करोति पुंसामशुभैःप्रदृष्टःस्वस्वाम्यदृष्टोविपरीतमेव।४। लग्नेवित्ते तृतीयेवालग्नेशोपत्यमाग्रिमम्।तुर्येजन्माद्वितीयस्यपुरःपुत्र्यादिजन्मच।५। द्विदेहसंस्थाभृगुभौमचंद्राःसंतानमाद्योजनयंतिनूनम्। एतेपुनर्धान्विगतानकुर्युःपश्चात्तथाद्योगादितंमहद्भिः।६। संतानभावेगगनेचराणांयावन्मितानामिहदृष्टिरस्ति।स्यात्संततिस्तत्प्रमितानृसंज्ञैर्नराश्चकन्याःप्रमदाभिधानैः।७। संतानभावांकसमानसंख्यास्यात्संततिर्वेतिवदंतिकेचित्। नीचोच्चमित्रादिगृहास्थितानांदृष्ट्याशुभंवाशुभमर्भकाणाम्।८। नवांशतुल्याप्रभवात्रसंख्यादृष्ट्याशुभानांद्विगुणावगम्या। क्लिष्टाचपापग्रहदृष्टियोगामिश्राचमिश्रग्रहदृष्टितोत्र।९। सुताभिधानेभवनेयदिस्यात्खलस्यराशिःखलखेटयुक्तः। सौम्यग्रहालोकनवर्जितश्चसंतानहीनोमनुज

स्तदानीम् । १० । कविःकलत्रेदशमेमृगांकःपातालयाताश्चखलाभवंति । प्रसूतिकालेयदिमानवंतेसंतानहानिंजनयंति
नूनम् । ११। सुतेसितांशेचसितेनदृष्टेबहून्यपत्यानिविधोरपीदम्। दासीभवान्यात्मजभावनाथेयावन्मितैंशैःशिशुसंमि
तिःस्यात् । १२ । शुक्रेंदुवर्गेणयुतेसुतास्थेयुक्तेक्षितेवाभृगुचंद्रमोभ्याम् । भवंतिकन्याःसमराशिवर्गेपुत्राश्चतस्मिन्विष
माभिधाने ।१३। मंदस्यराशिःसुतभावसंस्थोमंदेनयुक्तःशशिनेक्षितश्च । दत्तात्मजाप्तिःशशिवद्बुधेऽपिक्रीतःसुतस्तस्य
नरस्यवाच्यः । १४ । संतानाधिपतेःपंचषष्ठारिःफस्थितेखले । पुत्राभावोभवेत्तस्ययदिजातोनजीवति । १५। मंदस्यवर्गे
सुतभावसंस्थेनिशाकरस्थेपिचवीक्षितेस्मिन्। दिवाकरेणोशनसानरस्यपुनर्भवासंभवसूनुलाब्धिः ।१६। शनेर्गणःपद्मानि
पुत्रभावेबुधेक्षितेनोरविभूमिजाभ्याम् । पुत्रोभवेत्क्षेत्रभवोथबौधेगणेपिगेहेरविजेनदृष्टे । १७। नवांशकाःपंचमभावसं
स्थायावन्मितैःपापखगैःप्रदृष्टाः । पश्यंतिगर्भाःखलुतत्प्रमाणाचेद्वीक्षितंनोशुभखेचराणाम् । १८। भूनंदनोनंदनभा
वयातोजातंचजातंतनयंनिहंति । दृष्टेयदाचित्रशिखंडिजेनभृगोःसुतेनप्रथमोपपन्नम् ।१९। इतिसुतभावः । अथशत्रु
भावः । वैरिव्रातःक्रूरकर्मामयानांचिंताशंकामातुलानांविचारः । होरापारावारपारंप्रयातैरेतत्सर्वंशत्रुभावेविचिंत्यम् ।१।
दृष्टिर्युतिर्वाखलखेचराणामरातिभावेरिविनाशनंस्यात् । शुभग्रहाणांयुतिदृष्टितोत्रशत्रूद्गमोप्यायमसंभवःस्यात् ।२।

इतिशत्रुभावः। अथजायाभावः। रणांगणंचाऽपिबणिक्क्रियाश्चजायाविचारागमनप्रमाणम् ॥ शास्त्रप्रवीणैर्हिविचारणी
यंकलत्रभावेकिलसर्वमेतत् ॥१॥ मूर्तैःकलत्रस्यनवांशकोवाद्विषट्कभावास्त्रिलवःशुभानाम्। अनेनयोगेनहिमानवानां स्या
दंगनानामचिरादवाप्तिः।२। सौम्यैर्युतंसौम्यमसौम्यदृष्टंजायागेहंदेहिनामंगनाप्तिम्। कुर्यान्नूनंवैपरीत्यादभा
वोमिश्रत्वेनप्राप्तिकालेप्रलापः।३। लग्नाद्व्ययेवारिपुमंदिरेवादिवाकरेदूभवतस्तदानीम्। स्यान्मानवस्यात्मजएकएव
भार्यापिचैकेतिवदंतिसंतः। ४। गंडांतकालेपिकलत्रभावेभृगोःसुतेलग्नगतेर्कजाते। वंध्यापतिःस्यान्मनुजस्तदानींशुभे
क्षितंनोभवनंखलेन। ५। व्ययालयेवामदनालयेवाखलेषुबुद्ध्यालयगेहिमांशौ। कलत्रहीनोमनुजस्तनूजैर्विवर्जितः
स्यादितिवेदितव्यम्। ६। प्रसूतिकालेचकलत्रभावेयमस्यभूमीतनयस्यवर्गे। ताभ्यांप्रदृष्टेव्यभिचारिणीस्याद्भर्त्ताऽ
पितस्याव्यभिचारकर्त्ता। ७। शुक्रेंदुपुत्रौचकलत्रसंस्थौकलत्रहीनंकुरुतोनरंतौ। शुभेक्षितौतौवयसोविरामेकामंचरा
मांलभतेमनुष्यः।८। शुक्रेंदुजीवशशिजैःसकलैस्त्रिभिश्चद्वाभ्यांकलत्रभवनेचतथैककेन। एषांगृहेविषमभेदविलोकिते
वासंतित्रयोभवनवर्गखगस्यभावाः। ९। कलत्रभावेचनवांशतुल्यानरस्यनार्योग्रहवीक्षणाद्वा। एकैकभौमार्कनवांश
केचजामित्रभावस्थबुधार्कयोर्वा। १०। शुक्रस्यवर्गेणयुतेकलत्रेबव्हंगनाप्तिर्भृगुवीक्षणेन। शुक्रेक्षितेसौम्यगणेंगना

नांबाहुल्यमेवाशुभवीक्षणान्न। ११। महीसुतेसप्तमभावयातेकांताविंयुक्तःपुरुषस्तदास्यात्। मंदेनदृष्टोम्रियतेऽपिल
ब्ध्वाशुभग्रहालोकनवर्जितेऽस्मिन् । १२ । पत्नीस्थानेयदाराहुःपापयुग्मेनवीक्षितः । पत्नीयोगस्तदानस्याद्भूतापि
म्रियतेचिरात्। १३। षष्ठेचभवनेभौमःसप्तमेराहुसंभवः। अष्टमेचयदासौरिस्तस्यभार्यानजीवति । १४। इतिसप्त
मभावः। अथसंक्षेपतोऽष्टमभावः। नद्युत्तारात्यंतवैषम्यदुर्गंशस्त्रंचायुःसंकटंचेतिसर्वम्। रंध्रस्थानेसर्वदाकल्पनीयंप्रा
चीनानामाज्ञयाजातकज्ञैः। १। तुर्यस्थानेयदाभानुःशशिनाचविलोकितः। यदिनोवीक्षितःसौम्यैर्मरणंतत्रनिर्दिशेत्। २।
होराविद्भिश्चाष्टमस्थानयातेनानाभेदैर्यत्फलंतत्प्रदिष्टम्। रिष्टाध्यायेचापिनिर्याणकेवायत्नान्नूनंप्रोच्यतेतच्चसर्वम्। ३।
रिष्टाऽध्यायेनिर्याणेवाऽग्रेसविशेषंनिरूपयिष्यामः। इतिसंक्षेपतोष्टमभावः। अथभाग्यभावः। धर्मक्रियायांहिभवेत्प्रवृत्ति
र्भाग्योपपत्तिर्विमलंचशीलम्। तीर्थप्रयाणंप्रणयःपुराणैःपुण्यालयेसर्वमिदंप्रदिष्टम्। १। विहायसर्वंगणकैर्विचिंत्यंभाग्या
लयंकेवलमत्रयत्नात्। आयुश्चमाताचपिताचवंशोभाग्यान्वितेनैवभवंतिधन्याः। २। मूर्तेश्चापिनिशापतेश्चनवमंभाग्या
लयेकीर्तितंतन्नस्वामियुतेक्षितंप्रकुरुतेभाग्यंस्वदेशोद्भवम्। चेदन्यैर्विषयांतरेत्रशुभदाःस्वोच्चादिपाः सर्वदाकुर्युर्भाग्य
मसाधवोऽतिविबलाद्दुःखोपलब्धिंपराम्। ३। भाग्येश्वरोभाग्यगतोऽस्तिकिंवासुस्थानगःसारविराजमानः। भाग्याश्रितः

कोऽस्तिविचार्यसर्वमत्यल्पमल्पंपरिकल्पनीयम् ।४। तनुत्रिसूनूपगतोग्रहश्चेद्योवाधिवीर्योनवमंप्रपश्येत् । यस्यप्रसूतौ
सतुभाग्यशालीविलासशीलोबहुलार्थयुक्तः ।५। चन्द्राग्यगामीखचरःसगेहेसौम्येक्षितोयस्यनरस्यसूतौ । भाग्याधिशा
लीस्वकुलावतंसोहंसोयथामानसराजमानः ।६। पूर्णेंदुयुक्तौरविभूमिपुत्रौभाग्यस्थितौसत्त्वसमन्वितौच । वंशानुमानात्
सचिवंनृपंवाकुर्वंतितेसौम्यदृशाविशेषात् ।७। स्वोच्चोपगोभाग्यगृहेनभोगोनरस्ययोगंकुरुतेसुलक्ष्म्या । सौम्येक्षितोसौ
यदिसौम्यपालंदंतावलोत्कृष्टविलासशीलः ।८। इतिभाग्यभावः । अथदशमभावः । व्यापारमुद्रान्नृपमानराज्यंप्रयोजनं
चापिपितुस्तथैवामहत्पदाप्तिःखलुसर्वमेतद्राज्याभिधानेभवनेविचार्यम् ।१। समुदितमृषिवर्यैर्मानवानांप्रयत्नादिहहिद
शमभावेसर्वकर्मप्रकामं। गगनगपरिदृष्ट्याराशिखेटस्वभावैःसकलमपिविचिंत्यंसत्वयोगात्सुधीभिः ।२। तनोःसकाशा
द्दशमेशशांकेवृत्तिर्भवेत्तस्यनरस्यनित्यं । नानाकलाकौशलवाग्विलासैःसर्वोद्यमैःसाहसकर्मभिश्च ।३। तनोःशशांकाद्दश
मेबलीयान्स्याज्जीवनंतस्यखगस्यवृत्त्या । बलान्वितद्वर्गपतेस्तुयद्वावृत्तिर्भवेत्तस्यखगस्यपाके । ४ । दिवामणिःकर्मणि
चंद्रतन्वोर्द्रव्याण्यनेकोद्यमवृत्तियोगात् । सत्वाऽधिकत्वंनरनायकत्वंपुष्टत्वमंगेमनसःप्रसादः ।५। लग्नेंदुतःकर्मणिचेन्महो
जःस्यात्साहसःक्रौर्यनिषादवृत्तिः । नूनंनराणांविषयाऽभिसक्तिर्दूरेनिवासःसहसाकदाचित् ।६। लग्नेंदुभ्यांकर्मगोरौहिणे

यःकुर्याद्दृढ्यंनायकत्वंबहूनां॥ शिल्पेभ्यासःसाहसंसर्वकार्यैर्विद्वद्वृत्त्याजीवितंमानवानां॥७॥ विलग्नतःशीतमयूखतोवा मामे
मघोनःसचिवोयथास्यात्। नानाधनाभ्यागमनानिपुंसांविचित्रवृत्त्यानृपगौरवंच ॥८॥ होरायाश्चनिशाकराद्भृगुसुतोमे
षूरणेसंस्थितोनानाशास्त्रकलाकलापविलसद्वृत्त्यादिशेज्जीवनं॥ दानेसाधुमतिंतथाविनयतांकामंधनाभ्यागमंमानंमानव
नायकादविरलंशीलंविशालंयदा॥९॥ होरायाश्चसुधाकराद्रविसुतःसूतौस्वमध्यस्थितोवृत्तिंहीनतरांनरस्यकुरुतेकाश्यं
शरीरेसदा॥खेदंवादभयंचधान्यधनयोर्हानित्वमुच्चैर्मनश्चित्तोद्वेगसमुद्भवेनचपलंशीलंचनोनिर्मलं॥१०॥सूर्यादिभिर्व्योम
चरैर्विलग्नादिंदोस्वपाकेक्रमशःप्रकल्प्या॥ अर्थोपलब्धिर्जनकाज्जनन्याःशत्रोर्हिताद्भ्रातृकलत्रभृत्यात्॥११॥रवींदुलग्नाप
दसंस्थितांशपतेस्तुवृत्त्यापरिकल्पयेत्ताम्॥ सदौषधोर्णादितृणैःसुवर्णैर्दिवामणिर्वृत्तिविधिंविदध्यात्॥१२॥नक्षत्रनाथोऽत्र
कलत्रतश्चजलाशयोत्पन्नकृषिक्रियादेःकुजोऽग्निसत्साहसधातुशस्त्रैःसोमात्मजःकाव्यजलाकलापैः॥१३॥जीवोद्विजात्मा
करदेवधर्मैःशुक्रोमहिष्यादिकरौप्यरत्नैःशनैश्चरोनीचतरप्रकारैःकुर्यान्नराणांखलुकर्मवृत्तिम्॥१४॥कर्मस्वामीग्रहोयस्य
नवांशेपरिवर्तते। तत्तुल्यकर्मणःवृत्तिंनिर्दिशंतिमनीषिणः॥१५॥ मित्रारिगेहोपगतैर्नभोगैस्ततस्ततोर्थःपरिकल्पनीयः। ॥१८॥
तुंगेपतंगेस्वगृहेत्रिकोणस्यादर्थसिद्धिर्निजबाहुवीर्यात्॥१६॥ लग्नार्थलाभोपगतैःसवीर्यैःशुभैर्भवेद्धनसौख्यमुच्चैःइती

रितंपूर्वंमुनिप्रवर्यैर्बलानुमानात्परिचिंतनीयम् ।१७। इतिदशमभावः। अथलाभभावः। गजाश्वहेमांबररत्नजातमां
दोलिकामंगलमंडनानि। लाभःकिलैषामखिलंविचार्यमेतत्तुलाभस्यगृहेग्रहज्ञैः। १। सूर्येणयुक्तेचविलोकितेवालाभा
लयेतस्यगणोऽत्रचेत्स्यात्। भूपालतश्चौरकुलात्कलेर्वाचतुष्पदादेर्बहुधाधनाप्तिः। २। चंद्रेणयुक्तंचविलोकितंवाला
भालयेचंद्रगणाश्रितंचेत्। जलाशयस्त्रीगजवाजिवृद्धिःपूर्णेभवेत्क्षीणतरेविलोमम्। ३। लाभालयंमंगलयुक्तदृष्टंप्र
कृष्टभूषामणिहेमलब्धिः। विचित्रयात्राबहुसाहसीस्यान्नानाकलाकौशलबुद्धियोगैः। ४। लाभेसौम्यगणाश्रितेस
तियुतेसौम्येनसंवीक्षितेनानाकाव्यकलाकलापविधिनाशिल्पेनलिप्यासुखम्। युक्तिद्रव्यमयोभवेद्धनचयःसत्साहसै
रुद्यमैःसख्यंचापिवणिक्जनैर्बहुतरंह्यौवैर्नृणांकीर्तितम्। ५। यज्ञक्रियासाधुजनानुयातोराजाश्रितोत्कृष्टरूपोनरःस्या
त्। द्रव्येणहेमप्रचुरेणयुक्तोलाभेगुरोर्वर्गयुगीक्षणंचेत्। ६। लाभालयंभार्गववर्गयातंयुतेक्षितंवायादिभार्गवेण। वे
श्याजनैर्वापिगमागमैर्वासद्रौप्यमुक्ताप्रचुरास्वलब्धिः।७। लाभवेश्मनिशनीक्षितयुक्तेतद्गणेनसहितेसतिपुंसाम्। नी
ललोहमहिषीगजलाभोग्रामवृंदपुरगौरवमिश्रः। ८। युक्तेक्षितेलाभगृहेसुखास्येवर्गेशुभानांसमवस्थितेच। लाभोन
राणांबहुधाथवास्मिन्सर्वग्रहैर्युक्तनिरीक्ष्यमाणे। ९। इतिलाभभावः। अथव्ययभावः। हानिर्दानंव्ययश्चापिदंडोनि

वंधएवच। सर्वमेतद्व्ययस्थानेचिंतनीयंप्रयत्नतः।१। व्ययालयेक्षीणकरःकलवान्सूर्योथवाद्वावपितत्रसंस्थौ। द्रव्यंह
रेद्भूमिपतिस्तुतस्यव्ययालयेवाकुजदृष्टियुक्ते।२। पूर्णेंदुसौम्येज्यसिताव्ययस्थाःकुर्वंतिसंस्थांधनसंचयस्य। प्रांत्य
स्थितेसूर्यसुतेकुजेनयुक्तेक्षितेवित्तविनाशनंस्यात्।३। इतिव्ययभावः। अथभावफलोपयुक्तत्वेनारिष्टाध्यायोनिरूप्यते।
लग्नेद्वाश्येकलत्रपुत्रभवनेस्वस्वामिसौम्यग्रहैर्युक्तेवाथविलोकितेखलुतदातत्प्राप्तिरावश्यकी। लग्नेचेत्सवितास्थितोरवि
सुतोजायाश्रितोमृत्युकृज्जायायाश्चमहीसुतःसुतगतःकुर्यात्सुतानांक्षतिम्।१। असौम्यमध्यस्थितभार्गवश्चेत्पातालरं
ध्रेखलखेटयुक्ते। सौम्यैरदृष्टेभृगुजेचपत्नीनाशोभवेत्पाशहुताशनाद्यैः।२। दिवाकरेंदूव्ययवैरियातौजायापतीएकवि
लोचनौस्तः। कलत्रधर्मात्मजगौसितार्कौपुमान्भवेत्क्षीणकलत्रएव।३। भसंधियातेचासितेस्मरस्थेतनौप्रयत्नेनतुभानु
सूनौ। वंध्यापतिःस्यान्मनुजस्तदानींसुतालयंनोशुभदृष्टयुक्तं।४। क्रूराश्चहोराःस्मरारिःफयाताःसुतालयेहीनबलःकला
वान्। एवंप्रसूतौकिलयस्ययोगोभवेत्सभार्यातनयैर्विहीनः।५। सितस्तयातेशनिभौमवर्गेभौमार्कदृष्टेपरदारगामी॥
मंदारचंद्रायदिसंयुताःस्युःपौश्चल्यसक्तौरमणीनरौस्तः।६। द्यूनेर्कजारौसभृगूशशांकादपुत्रभार्यंकुरुतोनरंतौ॥ स्याताां
नृनारीखगयोःस्मरस्थौसौम्येक्षितौतौशुभदौनृनार्योः॥७॥ परस्परांशोपगतौरवींदूरोषामयंतौकुरुतोनराणाम्॥ एकै

कगेहोपगतौतुतौवातमेवरोगंकुरुतोनितांतं।८। मंदावनीसूनुरवींदवश्चेद्रन्ध्रारिवित्तव्ययभावसंस्थाः।आंध्यंभवेत्सार
समन्वितस्यखेटस्यदोषात्पुरुषस्यनूनम्। ९। मृगालिगोकर्कटकास्त्रिकोणेप्रसूतिकालेर्गलखेटयुक्ताः। निरीक्षितावाज
नयंतिजातंकुष्टेनयुक्तंप्रवदंतिसंतः।१०। मदार्कचंद्रास्त्रिसुतायधर्मेसौम्यैर्नयुक्तानचवीक्षिताश्चेत्। कर्णप्रणाशंजनयं
तिनूनंस्मरस्थितास्तेदशनाऽभिघातम्॥ ११। गुरुस्तेविधौलग्नगताश्चपापास्त्रिकोणगाजन्मापिशाचकस्य। गुरुस्तेविधौ
लग्नगतेतथैवनेत्रोपघातःखलुकल्पनीयः।१२। लग्नस्थितेदेवपुरोहितेस्तेशनैश्चवाताधिकतानितांतम्। जीवेविलग्नेव
निनंदनेस्तेमदोद्धतःस्यात्पुरुषोविशेषात्।१३। स्मरेत्रिकोणेधरणीतनूजेशनौतनौवापवनप्रकोपः। क्षीणेंदुमंदौव्यय
भावयातौतदापिवाताऽधिकतानराणाम्॥ १४॥ वंशच्छेदकरःशशांकभृगुजक्रूरैःखकामांबुपैः शिल्पीकेंद्रगताकिर्णा
बुधयुतश्चेश्यशेसमालोकिते। अंत्येदेवगुरौदिनेश्वरयुतस्यांशेचदासीयुतोनीचःकामगयोः खरांशुशशिनोःसौरेणसंदृष्टयोः
।१५। वयोराशिस्वनक्षत्रमेकीकृत्यपृथक्पृथक्। द्विचतुस्त्रिगुणंकृत्वासप्ताष्टरसभाजितम्। १६। आद्यंतयोर्भवेद्दुःखी
मध्येशून्यंधनक्षयः। स्थानत्रयेभशेषंतुमृत्युःसांकेषुवैजयी। १७। इत्यारिष्टाध्यायः॥ अथरविभावः। लग्नेऽर्कैल्पकचः
क्रियालसतनुःक्रोधीप्रचंडोन्नतोयामीलोचनरुक्सुकर्कशतनुःशूरोक्षमीनिर्घृणः॥ फुल्लाक्षःशशिभेक्रियेस्थितिहरःसिं

होनिशांधःपुमान्दारिद्र्योपहतोविनष्टनयःसंस्थस्तुलासंज्ञके ।१। धनसुतोत्तमवाहनवर्जितोहतमतिःसुजनोज्झित
सौहृदः। परगृहोपगतोहिनरोभवेद्दिनमणेर्द्रविणेयदिसंस्थितिः।२। प्रियंवदःस्याद्धनवाहनाढ्यःसुवर्णाचतोनुचरा
न्वितश्च। मितानुजःस्यान्मनुजोवलीयान्दिनाधिराजेसहजेधिसंस्थे ।३। सौख्येनयानेनधनेनहीनंतातस्यवित्तोपह
तिप्रवृत्तम्। चलन्निवासंकुरुतेपुमांसंपातालशालीनलिनीविलासी। ४ ।स्वल्पापत्यंशैलदुर्गेशभक्तंसौख्यायुक्तंसत्क्रि
याथैर्विमुक्तम्। भ्रांतस्वांतंमानवंहिप्रकुर्यात्सूनुस्थानेभानुमान्वर्तमानः।५।शश्वत्सौख्येनान्वितःशत्रुहंतासत्वोपेतश्चा
रुयानोमहौजाः। पृथ्वीभर्तुःस्यादमर्त्योहिमर्त्यःशत्रुक्षेत्रेमित्रसंस्थोयदिस्यात्।६। श्रियाविमुक्तोहतकायकांतिर्भया
मयाभ्यांसहितःकुशीलः।नृपप्रकोपार्तिकृशोमनुष्यःसीमंतिनीसद्मनिपद्मिनीशे।७। नेत्रालपत्वंशत्रुवर्गाऽभिवृद्धिंबु
द्धिभ्रंशःपूरुषस्यातिरोषः। अर्थालपत्वंकार्श्यमंगेविशेषादायुःस्थानेपद्मिनीप्राणनाथे।८। धर्मकर्मनिरतश्चसन्मतिः
पुत्रमित्रजसुखान्वितःसदा।मातृवर्गविषमोभवेन्नरस्त्रित्रिकोणभवनेदिवामणौ।९।सद्बुद्धिवाहनधनागमनानिनूनं
भूपप्रसादसुतसौख्यसमन्वितानि। साधूपकारकरणंमणिभूषणानिमेषूरणेदिनपतिःकुरुतेनराणां।१०। गीतप्रीतिं
चारुकर्मप्रवृत्तिंचसत्कीर्तिंवित्तपूर्तिंनितांतम्। भूपात्प्राप्तिंनित्यमेवप्रकुर्यात्प्राप्तिस्थानेभानुमान्मानवानाम्।११।तेजो

विहीनेनयनेभवेतांतातेनसाकंगताचित्तवृत्तिः। विरुद्धबुद्धिर्व्ययभावयातेकालेनालिन्याफलमुक्तमार्यैः। १२। इतिरविभा
वः। अथचंद्रभावः। दाक्षिण्यरूपधनभोगगुणैर्वरेण्यश्चंद्रेकुलीरवृषभाजगतेविलग्ने। उन्मत्तनीचबधिरोविकलोथमू
कः शेषेषुनाभवतिहीनतनौविशेषात्। १। सुखात्मजद्रव्ययुतोविनीतोभवेन्नरःपूर्णविधौद्वितीये। क्षीणेस्खलद्वाग्विधनो
ल्पबुद्धिर्न्यूनाधिकत्वेफलतारतम्यम्। २। हिंस्रःसगर्वःकृपणोल्पबुद्धिर्भवेन्नरोबंधुजनाश्रयश्च। दयाभयाभ्यांपरिवर्जि
तश्चद्विजाधिराजेसहजेप्रसूतौ। ३। जलाश्रयोत्पन्नधनोपलब्धिंकृष्यंगनावाहनसूनुसौख्यम्। प्रसूतिकालेकुरुतेक
लावान्पातालसंस्थोद्विजदेवभक्तिम्। ४। जितेंद्रियःसत्यवचाःप्रसन्नोधनात्मजावाप्तसमस्तसौख्यः। सुसंग्रहीस्या
न्मनुजःसुशीलःप्रसूतिकालेतनयालयेब्जे। ५। मंदाग्निःस्यान्निर्दयःक्रौर्ययुक्तोनालपालस्योनिष्ठुरोदुष्टचित्तः। रोषावे
शात्यंतसंजातशत्रुःशत्रुक्षेत्रेरात्रिनाथेनरःस्यात्। ६। महाभिमानीमदनातुरश्चनरोभवेत्क्षीणकलेवरश्च। धनेनहीनो
विनयेनचंद्रेचंद्राननास्थानविराजमाने। ७। नानारोगक्षीणदेहोतिनिःस्वश्चोराराातिक्षोणिपालाभितप्तः। चित्तोद्वेगै
र्व्याकुलोमानवःस्यादायुःस्थानेवर्त्तमानेहिमांशौ। ८। कलत्रपुत्रद्रविणोपपन्नःपुराणवार्ताश्रवणानुरक्तः। सुकर्मसत्तीर्थ
परोनरःस्याद्यदाकलावान्नवमालयस्थः। ९। क्षोणीपालादर्थलब्धिश्चशालाकीर्तिर्मूर्तिःसत्वसंतोषयुक्ता। चंचल्लक्ष्मीः

शीलसंशालिनीस्यान्मानस्थानेयामिनीनायकश्चेत् ।१०। सन्माननानाविधवाहनाप्तिःकीर्तिश्चसद्भोगगुणोपलब्धिः । प्रसन्नतालाभविराजमानेताराधिराजेमनुजस्यनूनम् । ११ । हीनत्वंवैचारुशीलेनमित्रैर्वैकल्यंस्यान्नेत्रयोःशत्रुवृद्धिः । रोषावेशःपूरुषाणांविशेषात्पीयूषांशौद्वादशेवेश्मनीह । १२ । इतिचंद्रभावः । अथभौमभावः । अतिमतिभ्रमताचकलेवरंक्षतयुतंबहुसाहसमुग्रताम् । तनुभृतांकुरुतेतनुसंस्थितोवनिसुतोगमनागमनानिच । १ । अधनतांकुजनाश्रयतांतथाविमतितांकृपयातिविहीनताम् । तनुभृतांविदधातिविरोधितांधननिकेतनगोवनिनंदनः ।२। भूपप्रसादोत्तमसौख्यमुच्चैरुदारताचारुपराक्रमश्च । धनानिचभ्रातृसुखोज्झितत्वंभवन्नराणांसहजेमहीजे । ३ । दुःखंसुहृद्वाहनतःप्रवासोकलेवरेरुग्बलताऽबलत्वम् । प्रसूतिकालेकिलमंगलाख्येरसातलस्थेफलमुक्तमार्यैः । ४ । कफानिलाद्याकुलताकलत्रान्मित्राच्चपुत्रादपिसौख्यहानिः । मतिर्विलोलाविपुलात्मजोस्मिन्प्रसूतिकालेतनयालयस्थे । ५ । प्राबल्यंस्याज्जाठराग्नेर्विशेषाद्रोषावेशःशत्रुवर्गोपशांतिः । साद्धिःसंगोनंगवृद्धिर्नराणांगोत्रापुत्रेशत्रुसंस्थेप्रसूतौ ।६। नानानर्थैर्व्यर्थचिंतोपसर्गैर्वैरिव्रातैर्मानवंहीनदेहम् । दारागारात्यंतदुःखप्रतप्तंदारागारेंगारकोयंकरोति । ७ । वैकल्यंस्यान्नेत्रयोर्दुर्भगत्वंरक्तात्पीडानीचकर्मप्रवृत्तिः । बुद्धेरांध्यंसज्जनानांचनिंदारंध्रस्थानेमेदिनीनंदनेस्मिन् । ८ । हिंसाविधानेमनसःप्रवृ

त्तिंभूमीपतेर्गौरवतोगलब्धिम् । क्षीणंचपुण्यंद्रविणंनराणांपुण्यास्थितःक्षोणिसुतःकरोति । ९ । विश्वंभरापतिसमत्वमती
वतोषंसत्साहसंपरजनोपकृतौप्रयत्नम् । चंचाद्विभूषणमणिद्विविधागमाश्चमेषूरणेधराणिजःकुरुतेनराणाम् । १० । ताम्र
प्रवालविलसत्कलधौतरक्तवस्त्रागमंसुललितानिचवाहनानि । भूपप्रसादसुकुतूहलमंगलानिदद्यादवाप्तिभवनेहिसदा
वनेयः । ११ स्वामित्रवैरंनयनातिबाधांक्रोधाभिभूतंविमलत्वमंगे । धनव्ययंबंधनमल्पतेजोव्ययेधराजोविदधातिनून
म् । १२ । इतिभौमभावः । अथबुधभावः । शांतोविनीतःसुतरामुदारोनरःसदाचारपरोतिधीरः । विद्वान्कलाज्ञो
विपुलात्मजश्चशीतांशुसूनौजननेतनुस्थे । १ । विमलशीलयुतोगुरुवत्सलःकुशलताकलितार्थमहत्सुखः । विपुलकां
तिसमुन्नतिसंयुतोधननिकेतनगेशशिनंदने । २ । साहसेनिजजनैःपरियुक्तश्चित्तशुद्धिरहितोहतसौख्यः । मानवःकुश
लितोप्सितकर्त्ताशीतभानुतनयेनुजसंस्थे । ३ । सद्वाहनैर्धान्यधनैःसमेतःसंगीतनृत्याभिरुचिर्मनुष्यः । विद्याविभूषा
गमनाधिशालीपातालगेशीतलभानुसूनौ । ४ । पुत्रसौख्यसहितंबहुमित्रंमंत्रवादकुशलंचसुशीलम् । मानवंकिलक
रोतिसलीलंशीतदीधितिसुतःसुतसंस्थः । ५ । वादप्रीतिःसामयोनिष्ठुरात्मानानारातिव्रातसंतप्तचित्तः । नित्यालस्य
व्याकुलःस्यान्मनुष्यःशत्रुक्षेत्रेरात्रिनाथात्मजेस्मिन् । ६ । चारुशीलविभवैरलंकृतःसत्यवाक्यनिरतोनरोभवेत् । का

मिनीकनकसूनुसंयुतःकामिनीभवनगामिनींदुजे । ७ । भूपप्रसादाप्तसमस्तसंपन्नरोविरोधीसुतरांसुवर्गः । सर्वत्रय
त्नान्यकृतापहर्त्तारंध्रेभवेच्चंद्रसुतःप्रसूतौ ।८। उपकृतिकृतिविद्याचारुजातादरःस्यादनुचरधनसूनुप्राप्तहर्षोविशेषात् ।
वितरणकरणोद्यन्मानसोमानवश्चेदमृतकिरणजन्मापुण्यधामागमोयम् ।९ ।ज्ञानप्रज्ञाश्रेष्ठकर्मामनुष्योनानासंपत्सं
युतोराजमान्यः । चंचल्लीलावाग्विलासाधिशालीमानस्थानेबोधनेवर्तमाने। १०। भोगासक्तोऽत्यंतवित्तोविनीतोनि
त्यानंदश्चारुशीलोबलिष्ठः ।नानाविद्याभ्यासकृन्मानवःस्याल्लाभस्थानेनंदनेशीतभानोः। ११। कलाविहीनःसुजनो
ज्झितश्चस्वकार्यदक्षोविजितात्मपक्षः । धूर्त्तोनितांतंमलिनोनरःस्याद्व्ययोपपन्नेद्विजराजसूनौ। १२ ।इतिबुधभावः।
अथगुरुभावः ॥ विद्यासमेतोऽभिमतोहिराज्ञांप्राज्ञःकृतज्ञोनितरामुदारः । नरोभवेच्चारुकलेवरश्चतनुस्थितेचित्रशिखं
डिसूनौ। १ ।सद्रूपविद्यागुणकीर्तियुक्तःसंत्यक्तवैरोपिनरोगरीयान् । त्यागीसुशीलोद्रविणेनपूर्णोगीर्वाणवंद्येद्रविणो
पयाते ।२। सौजन्यहीनःकृपणःकृतघ्नः कांतासुतप्रीतिविवर्जितश्च। नरोऽग्निमांद्याबलतासमेतःपराक्रमीशक्रपुरोहिते
स्मिन् । ३ ।सन्मानननानाधनवाहनाद्यैःसंजातहर्षःपुरुषःसदैव । नृपानुकंपासमुपात्तसंपद्भोलिभृन्मंत्रिणिभूतलस्थे
।४। सन्मित्रपुत्रोत्तममंत्रशास्त्रमुख्यानिनानाधनवाहनानि। दद्याद्गुरुःकोमलवाग्विलासंप्रसूतिकालेतनयालयस्थः।

। ५ । सङ्गीतविद्याहृतचित्तवृत्तिःकीर्तिप्रियोरातिजनप्रहर्ता । प्रारब्धकार्यालसकृन्नरःस्यात्सुरेन्द्रमंत्रीयदिशत्रुसंस्थः
। ६ । शास्त्राभ्यासासक्तचित्तोविनीतःकांताविक्तात्यंतसंजातसौख्यः ॥ मंत्रीमर्त्यःकाव्यकर्त्ताप्रसूतौजायाभावेदेवदेवा
धिदेवे । ७ । प्रेष्योमनुष्योमलिनोऽतिदीनोविवेकहीनोविनयोज्झितश्च । नित्यालसःक्षीणकलेवरःस्यादायुर्विशेषो
वचसामधीशे । ८ । नरपतेःसचिवःसुकृतीकृतीसकलशास्त्रकलाकलनादरः । व्रतकरोहिनरोद्विजतत्परःसुरपुरोधसि
वैतपसिस्थिते । ९ । सद्राजचिन्होत्तमवाहनानिमित्रात्मजश्रीरमणीसुखानि । यशोभिवृद्धिंबहुधाविधत्तेराज्येसुरे
ज्योविजयंनराणाम् । १० । सामर्थ्यमर्थागमनानिनूनंसद्वस्त्ररत्नोत्तमवाहनानि । भूपप्रसादंकुरुतेनराणांगीर्वाणवंद्यो
यदिलाभसंस्थः । ११ । नानाचिंतोद्वेगसंजातकोपंपापात्मानंसालसंत्यक्तलज्जम् । बुद्ध्याहीनंमानवंमानहीनंवागीशोयं
द्वादशस्थःकरोति । १२ । इतिगुरुभावः । अथशुक्रभावः । बहुकालकुशलोविमलोक्तिकृत्सुवदनोमदनानुभवःपुमान् ।
अवनिनायकमानधनान्वितोभृगुसुतेतनुभावगतेसति । १ । सदन्नपानाभिरतांनितांतंसद्वस्त्रभूषाधनवाहनाढ्यम् । । वि
चित्रविद्यंमनुजंप्रकुर्याद्धनोपपन्नोभृगुनंदनोयम् । २ । कृशांगयष्टिःकृपणोदुरात्माद्रव्येणहीनोमदनानुतप्तःसतामनिष्टो
बहुदुष्टचेष्टोभृगोस्तनूजेसहजेनरःस्यात् । ३ । मित्रक्षेत्रग्रामसद्वाहनानांनानासौख्यंवंदनंदेवतानाम् ॥ नित्यानंदंमानवा

नांप्रकुर्याद्दैत्याचार्यस्तुर्यभावस्थितोऽयम् ।४। सकलकाव्यकलाभिरलंकृतस्तनयवाहनधान्यसमन्वितः। नरपतेर्गुरुगौरवभाङ्नरोभृगुसुतेसुतसद्मनिसंस्थिते।५। अभिमतोनभवेत्प्रमदाजनैर्ननुमनोभवहीनतरोनरः । विबलताकलितः किलसंभवेभृगुसुतेऽरिगतेऽरिभयान्वितः।६। बहुकलाकुशलोजलकेलिकृद्रतिविलासविधानविचक्षणः। अतितरांनाटिनीकृतसौहृदःसुनयनाभवनेभृगुनंदने।७। प्रसन्नमूर्त्तिर्नृपलब्धमानःशठोऽतिनिःशंकतरःसगर्वः स्त्रीपुत्रचिंतासहितः कदाचिन्नरोष्टमस्थानगतेसिताख्ये।८। अतिथिगुरुसुरार्चातीर्थयात्रार्पितार्थःप्रतिदिनधनयानात्यंतसंजातहर्षः। मुनिजनसमवेषःपूरुषस्त्यक्तरोषोभवतिनवमभावेसंभवेभार्गवेस्मिन्।९। सौभाग्यसन्मानविराजमानःस्नानार्चनध्यानमनाधनाढ्यः। कांतासुतप्रीतिरतीवनित्यंभृगोःसुतेराज्यगतेनरःस्यात्।१०। सद्गीतनृत्यादरतानितांतंनित्यंचचिंतागमनानिनूनम्। सत्कर्मधर्मागमचित्तवृत्तिर्भृगोःसुतोलाभगतोयदिस्यात्।११। संत्यक्तसत्कर्मगतिर्विरोधीमनोभवाराधनमानसश्च। दयालुतासत्यविवर्जितःस्यात्काव्येप्रसूतौव्ययभावयाते।१२। इतिशुक्रभावः। अथमंदभावः। प्रसूतिकालेनलिनीशसूनुःस्वोच्चत्रिकोणर्क्षगतोविलग्ने। कुर्यान्नरंदेशपुराधिनाथंशेषेष्वमंदंसरुजंदरिद्रम्।१। अन्यालयस्थोव्यसनाभिभूतोजनोज्झितःस्यान्मनुजश्चपश्चात्। देशांतरेवाहनराजमानोधनाभिधानेभवनेर्कसूनौ।२। राजमानशु

कुशीलमालस्ययुक्तंकलिदुर्बलांगम् । मालिन्यभाजंमनुजंविदध्याद्रसातलस्थोनलिनीशजन्मा । ४ । सदागदक्षीणत
रंशरीरंधनेनहीनत्वमनंगहानिम् । प्रसूतिकालेनलिनीशपुत्रःपुत्रास्थितःपुत्रभयंकरोति ।५। विनिर्जितारातिगणोगुण
ज्ञःसुज्ञाभ्यनुज्ञापरिपालकःस्यात् । पुष्टांगयष्टिःप्रबलोदराग्निर्नरोर्कपुत्रेसतिशत्रुसंस्थे ।६ । आमयेनबलहीनतांगतो
हीनवृत्तिजनचित्तसंस्थितिः । कामिनीभवनधान्यदुःखितःकामिनीभवनगेशनैश्चरे ।७। कृशतनुर्नदुद्भुविचर्चिकाप्र
भवतोभयतोषविवर्जितः । अलसतासहितोहिनरोभवेन्निधनवेश्मनिभानुसुतेस्थिते । ८ । धर्मकर्मसहितोविकलांगो
दुर्मतिर्हिमनुजोतिमनोज्ञः । संभवस्यसमयेयदिकोणस्त्रित्रिकोणभवनेयदिसंस्थे । ९ । राज्ञःप्रधानमतिनीतियुतंवि
नीतंसंग्रामवृंदपुरभेदनकाधिकारम् । कुर्यान्नरंसुचतुरंद्रविणेनपूर्णमेषूरणोहितरणेस्तनुजःकरोति । १० । कृष्णाश्वाना
मिंद्रनीलोर्णिकानांनानाचंचद्वस्तुदंतावलानाम् । प्राप्तिंकुर्यान्मानवानांबलीयान्प्राप्तिस्थानेवर्तमानेर्कसूनौ । ११ । द
याविहीनोविधनोव्ययार्तःसदाऽलसोनीचजनानुयातः । नरोंगभंगोज्झितसर्वसौख्योव्ययस्थितेभानुसुतेप्रसूतौ । १२ ।
तन्वादिस्थशनेःप्रोक्तंयच्चभावोद्भवंफलम् । राहोस्तदेवविज्ञेयंमुनीनामपिसंमतम् । १३ । स्वोच्चास्थितःपूर्णफलंविध

त्तेस्वर्क्षौहितर्क्षौहिफलार्धमेव । फलांघ्रिमात्रंरिपुमंदिरस्थश्चास्तंप्रयातःखचरोनाकिंचित् । १४। अथराहुफलम् । लग्ने
तमोदुष्टमतिस्वभावंनरंचकुर्यात्स्वजनानुवंचकम् । शीर्षव्यथाकामरसेनसंयुतंकरोतिवादेविजयंसरोगम् । १ । धनगते
रविचंद्रविमर्दनेमुखरतांकितभावमथोभवेत् । धनविनाशकरोहिदरिद्रतांखलुतदालभतेमनुजोटनम् । २ । दुश्चिक्येऽ
रिभवोद्भवंवितनुतेलोकेयशस्वीनरःश्रेयोवापिभवंतदाहिलभतेसौख्यंविलासादिकम् । भ्रातृणांनिधनंपशोश्चमरणंदा
रिद्र्यभावैर्युतंनित्यंसौख्यगणैःपराक्रमयुतंकुर्याच्चराहुःसदा । ३ । सुखगतेरविचंद्रविमर्दनेसुखविनाशनतांमनुजोलभेत् ।
स्वजनतांसुतमित्रसुखंनरोनलभतेचसदाभ्रमणंनृणाम् । ४ । सुखगतोनहिमित्रविवृद्धतामुदरशूलविलासविपीडनम् ।
खलुतदालभतेमनुजोभ्रमंसुतगतेरविचंद्रविमर्दने । ५ । शत्रुक्षयंद्रव्यसमागमंचपशूत्थपीडाकटिपीडनंच । समागमैर्म्लै
च्छजनैर्महाबलंप्राप्नोतिजंतुर्यदिषष्ठगेतमे । ६ । जायांविरोधंखलुवाप्रणाशंप्रचंडरूपामयकोपयुक्ताम् । विवादशीला
मथरोगयुक्तांप्राप्नोतिजंतुर्मदनेतमेच । ७ । अनिष्टनाशंखलुगुह्यपीडांप्रमेहरोगंवृषणस्यवृद्धिम् ॥ प्राप्नोतिजंतुर्विकला
रिलाभंसिंहीसुतेवाखलुमृत्युगेहे ॥ ८ ॥ धर्मार्थनाशःकिलधर्मगेतमेसुखाल्पतावैभ्रमणंनरस्य ॥ दारिद्रताबंधुसुखाल्पता
चभवेच्चलोकेकिलदेहपीडा । ९ । पितुर्नासुखंकर्मगोयस्यराहुःस्वयंदुर्भगःशत्रुनाशंकरोति ॥ रुजोवाहनेवातपीडांचजं

तोयंदासौख्यगोप्रीतिगःकृष्टभाजम् । १० । लाभेगतेयदितमेसकलार्थलाभंसौख्याधिकंनृगणाद्विविधंचमानम् । व
स्त्रादिकांचनचतुष्पदसौख्यभावंप्राप्नोतिसौख्यविजयंचमनोरथंच । ११ । नेत्रेचरोगंकिलपादघातंप्रपंचभावंकिलवत्स
लत्वम् । दुष्टेरतिंमध्यमसेवनंचकरोतियानंव्ययगेतमेच । १२ । इतिराहुफलम् । अथकेतुफलम् । यदालग्नगश्चेच्छि
खीसूत्रकर्त्तासरोगादिभोगोभयंव्यग्रताच । कलत्रादिचिंतामहोद्वेगताचशरीरेप्रबाधाव्यथामारुतस्य । १ । धनेचेच्छि
खीधान्यनाशोधनंचकुटुंबाद्विरोधोनृपाद्व्यचिंता । मुखेरोगतासंततंस्यात्तथाचयदास्वेगृहेसौम्यगेहेऽतिसौख्यम् । २ ।
शिखीविक्रमेशत्रुनाशंचवादंधनंभोगमैश्वर्यतेजोऽधिकंच । भवेद्बंधुनाशःसदाबाहुपीडासुखंस्वोच्चगेहेभवोद्वेगताच । ३ ।
चतुर्थेचमातुःसुखंनोकदाचित्सुहृद्वर्गतःपित्ततोनाशमेति । शिखीबंधुहीनःसुखंस्वोच्चगेहेचिरंनैतिसर्वैःसदाव्यग्रताच । ४ ।
यदापंचमेयस्यकेतुश्चजातःस्वयंस्वोदरेघातपातादिकष्टम् । स्वबंधुप्रियसंततिःस्वल्पपुत्रःसदासंभवेद्वीर्ययुक्तोनरश्च
। ५ । शिखीयस्यषष्ठेस्थितोवैरिनाशोभवेन्मातुलात्पक्षतोमानभंगः ॥ चतुष्पात्सुखंद्रव्यलाभोनितांतंनरोगस्यदेहेसदा
व्याधिनाशः । ६ । शिखीसप्तमेमार्गताश्चित्तवृत्तिंसदावित्तनाशोऽथवावारिभूतः ॥ भवेत्कीटगेसर्वदालाभकारीकलत्रादि
पीडाव्ययोव्यग्रताच । ७ । गुदेपीडनंवाहनैर्द्रव्यलाभंयदाकीटगेकन्यकेयुग्मगेवा ॥ भवेच्छिद्रगेराहुछायादयास्यादजे

गोलिंगेजायतेचातिलाभः ।८। यदाधर्मगःकेतवःक्लेशनाशःसुतार्थीभवेन्म्लेच्छतोभाग्यवृद्धिः ।सहेतुव्यथांबाहुरोगांवि
धत्तेतपोदानतोहास्यवृद्धिंकरोति। ९ । पितुर्नोसुखंकर्मगोयस्यकेतुः स्वयंदुर्भगःशत्रुनाशंकरोति । रुजोवाहनेवातपीडा
चजंतोर्यदाकर्मगःसौख्यगःकष्टभाजम् ।१०।सुभार्षासुविद्याधिकोदर्शनीयःसुभोगःसुतेजाःसुवस्त्रोपियस्य ।गुदेपीड्य
तेसंततेर्दुर्भगत्वंशिखीलाभगःसर्वलाभंकरोति । ११ । शिखीरिःफगःपादनेत्रेचपीडास्वयंराजतुल्योव्ययंवैकरोति ।
रिपोर्नाशनंमानसेनैवशर्मरुजापीड्यतेबस्तिगुह्यंखरोगम् । १२ । इतिकेतुफलम् । अथमेषादिगृहेरवौदृष्टिफलम् । दा
नधर्मबहुभृत्यसंयुतःकोमलामलतनुर्गृहप्रियः । आवनेयभवनेविरोचनेशीतदीधितिनिरीक्षितेसति । १ । क्रूरोनरःसंग
रकर्मधीरश्चारक्तनेत्रांघ्रिरलंबलीयान् । भवेदवश्यंकुजगेहसंस्थेदिवामणौक्षोणिसुतेनदृष्टे ।२।सुखेनसत्वेनधनेनहीनः
प्रेष्यःप्रवासीमलिनःसदैव । भवेदवश्यंपरवान्मनुष्यःसहस्ररश्मौकुजभेज्ञदृष्टे । ३ । दातादयालुर्बहुलार्थयुक्तोनृपाल
मंत्रीकुलधुर्यवर्यः । स्यान्मानवोभूतनयालयस्थेपत्यौनलिन्याःकिलजीवदृष्टे।४।हीनांगनाप्रीतिरतीवदीनोधनेनहीनो
मनुजःकुमित्रः । त्वग्दोषयुक्तःक्षितिपुत्रगेहेमित्रेऽधिसंस्थेभृगुपुत्रदृष्टे । ५। उत्साहहीनोमलिनोतिदीनोदुःखाभिभूतो
विमतिर्नरःस्यात् । कांतेनलिन्याःक्षितिजालयस्थेप्रसूतिकालेरविजेनदृष्टे।६।वारांगनाप्रीतिकरोनितांतंस्याद्भूरिभार्यः

सलिलोपजीवी । दिनाधिराजेभृगुजालस्थेकलानिधिप्रेक्षणतांप्रयाते । ७ । संग्रामधीरोऽतितरांमहौजाःसुसाहसप्रा
प्तधनोरुकीर्तिः । क्षीणोनरःस्याद्भृगुमंदिरस्थेसहस्ररश्मौकुसुतेनदृष्टे ।८। संगीतसत्काव्यकलाकलापेलेखक्रियायांकु
शलोनरःस्यात् । प्रसन्नमूर्तिर्भृगुवेश्मयातेप्रद्योतनेसोमसुतेनदृष्टे । ९ । वंशानुमानान्नृपतिप्रधानःसद्रत्नभूषाद्रविणा
न्वितोवा । भीरुर्नरःशुक्रगृहंप्रपन्नेदृष्टेरवौदेवपुरोहितेन । १० । सुलोचनःकांतवपुःप्रधानोमित्रैरमित्रैःसहितःसचिंतः ।
भवेन्नरोदैत्यगुरोर्गृहेर्केसंवीक्षितेदैत्यपुरोहितेन । ११ । दीनोर्थहीनोऽलसतांप्रपन्नोभार्यामनोवृत्तिविभिन्नवृत्तः । अ
साधुवृत्तामययुङ्नरःस्याच्छुक्रालयेऽर्केऽर्कसुतेनदृष्टे ।१२। मित्रैरमित्रैःपरिपीडितश्चविदेशयातोऽपिधनेनहीनः । नि
रंतरोद्वेगकरोनरःस्यात्सौम्यालयेऽर्केहरिणांकदृष्टे । १३ । रिपुभयकलहाद्यैःसंयुतोत्यंतदीनोरणजयविधिहीनोऽत्यंतसं
जातलज्जः । भवतिननुमनुष्यःसालसश्चापिहंसेबुधभवननिवासेलोहितांगेनदृष्टे । १४ । भूपप्रसादोन्नतिमात्मजानां
सहंतिनोशत्रुजनाप्तमित्राः । प्रसूतिकालेनलिनीवनेशेबुधर्क्षसंस्थेचबुधेनदृष्टे ।१५। सुगुप्तमंत्रोतितरांस्वतंत्रःकलत्र
पुत्रादिजनेसवर्गः । भवेन्नरःशीतकरात्मजर्क्षेदिवाकरेदेवगुरुप्रदृष्टे ।१६। विदेशवासीचपलोविलासीविषाग्निशस्त्रांकित
मूर्तिवर्ती । पृथ्वीपतेर्दौत्यकरोनरःस्यादर्केबुधर्क्षेभृगुपुत्रदृष्टे ।१७। धूर्त्तोतिभृत्योगतचित्तबुद्धिर्निजैःसदोद्विग्नमनामनु

ष्यः। दिवाकरेशीतकरात्मजर्क्षेनिरीक्षितेभास्कारिणाप्रसूतौ ।१८। पुण्यैश्चपानीयभवैर्महार्थीपृथ्वीपतिर्वासचिवश्चरौ
द्रः। भवेन्नरोजन्मनिचंडरश्मौकर्कटकस्थेशिशिरांशुदृष्टे।१९।स्वबंधुवर्गैर्गतचित्तबुद्धिःशोफादिरोगैश्चभगंदरैर्वा। पी
डानराणांहिकुलीरसंस्थेदिवामणौक्षोणिसुतेनदृष्टे।२०। विद्यायशोमानविराजमानोभूपानुकंपाप्तमनोभिलाषः। निर
स्तशत्रुश्चबुधेनदृष्टेकर्कटकस्थेद्युमणौनरःस्यात्।२१। कुलाधिकश्चामलकीर्तिशालीभूपालसंप्राप्तमहत्पदार्थः। भवेन्न
रःशीतकरर्क्षयातेदिवामणौवाक्पतिवीक्ष्यमाणे।२२। स्त्रीसंश्रयाद्दव्यधनोपलब्धिःपरस्यकृत्येहृदयेविषादः। निशाकरा
गारकृताधिकारेदिवाकरेशुक्रनिरीक्ष्यमाणे ।२३। धूर्तोगभीरःक्षितिपालमान्योधनोपलब्धार्थयुतःप्रसिद्धः। मित्रेनि
जक्षेत्रयुतेप्रसूतौनक्षत्रनाथेननिरीक्ष्यमाणे।२४।कफानिलार्तःपिशुनोन्यकार्येस्यादंतरायश्चपलस्वभावः। क्लेशीनरः
शीतकरर्क्षसंस्थेदिवामणौमंदनिरीक्ष्यमाणे। २५।नानांगनाप्रीतिरतीवधूर्त्तःकफात्मकःक्रूरतरश्चशूरः। महोद्यमःस्या
न्मनुजःप्रधानःसिंहास्थितेऽर्केकुसुतेनदृष्टे।२६। धूर्त्तोनृपानुव्रजनःसुसत्वोविद्वत्प्रियोलेखनतत्परश्च। भवेन्नरःकेसरि
णिप्रयातेदिवामणौसौम्यनिरीक्ष्यमाणे।२७। देवालयारामतडागवापीनिर्माणकर्त्तास्वजनप्रियश्च। भवेन्नरोदेवपुरो
हितेननिरीक्षितेऽर्केमृगराजसंस्थे।२८। त्वग्दोषरोषापयशोभिभूतोगतोत्सवःस्वीयजनोज्झितश्च। स्यान्मानवःसत्य

दयाविहीनःपंचानने ऽर्कैभृगुजेनदृष्टे । २९ । शठोनरःकार्यविघातकर्त्तासंतापयेदात्मजनांश्चनूनम्। नरोमृगेंद्रोपगते
दिनेशेदिनेशपुत्रेणनिरीक्ष्यमाणे । ३० । कायकांतिसुतसौख्यसमेतोवाग्विलासकुशलःकुलशाली। स्यान्नरः सुरपुरो
हितस्थलेभास्करोहिमकरेणाहिदृष्टे । ३१ । संग्रामसंतप्तयशोविशेषोवक्ताविमुक्तानुजनानुसंगः। स्थिराश्रयोजीवगृ
हस्थितेर्केभौमेनदृष्टपुरुषःप्रचंडः। ३२ । धातुक्रियाकाव्यकलाकथाज्ञःसद्वाक्यमंत्रादिविधिप्रवीणः । सतांमतःस्यात्पु
रुषोदिनेशेसौम्येक्षितेजीवगृहोपयाते । ३३ । नृपालमैत्रीकुलभूमिपालःकलाविधिज्ञोधनधान्ययुक्तः । विद्वान्पुमा
न्भानुमतीज्यगेहेसंदृष्टदेहेमरपूजितेन । ३४ । सुगंधमाल्यांबरचारुयोषाभूषाविशेषानुभवाप्तसौख्यः। भवेन्नरोदेवपु
रोहितर्क्षेप्रद्योतनेदानववंद्यदृष्टे ।३५। परान्नभुङ्गीचनरैःप्रवृत्तश्चतुष्पदप्रीतिधरोनरःस्यात् । सूर्येसुराचार्यगृहेप्रयाते
निरीक्षितेभानुसुतेनसूतौ । ३६ । नारीप्रसंगेनगतार्थसौख्योमायापटुश्चंचलचित्तवृत्तिः । भवेन्मनुष्यःशनिवेश्मनि
स्थेसहस्त्ररश्मौहिमरश्मिदृष्टे । ३७। परकलहहतार्थोव्याधिवैरिप्रतप्तस्त्वतिविकलशरीरोऽत्यंतचिंतासमेतः । भवति
ननुमनुष्यःसंभवेतिग्मरश्मौगतवतिसुतगेहेदृष्टदेहेकुजेन । ३ । क्लीबस्वभावःपरचित्तहारीसाधूज्झितःशूरतरोनरः
स्यात् । दिवाकरेशीतकरात्मजेनदृष्टेप्रसुतौशनिमंदिरस्थे । ३९ । सत्कर्मकर्त्तामतिमान्बहूनांसमाश्रयश्चारुयशामन

स्वी । स्यान्मानवोभानुसुतालयस्थेमानौचवाचस्पतिनाप्रदृष्टे । ४० । शंखप्रवालामलरत्नवित्तंवरांगनाभ्योऽपिधनोप
लब्धिम् । करोतिभानुर्ननुमानवानांशून्यालयस्थोभृगुजेनदृष्टः । ४१ । प्रौढप्रतापाद्विजितारिपक्षःक्षोणीपतिप्रीतिमहा
प्रतिष्ठः । प्रसन्नमूर्तिः प्रभवेन्मनुष्यःशून्यालयेऽर्केशनिनाप्रदृष्टे ।४२। इतिमेषादिगृहेरवौदृष्टिफलम् । अथचंद्रेप्रतिग्र
हदृष्टयः । उग्रस्वभावोऽपिमृदुर्नतानांधीरोधराधीश्वरगौरवाढ्यः । नरोभवेत्संगरभीरुरेवमेषेशशांकेनलिनीशदृष्टे ।१।
विषाग्निवातास्त्रभयंकदाचित्स्यान्मूत्रकृच्छ्रंमहदाश्रयश्च । दंताक्षिपीडानिबिडाजडांशौमेषस्थितेभूमिसुतेनदृष्टे । २ ।
विलसदमलकीर्तिःसर्वविद्याप्रवीणोद्रविणगुणगणाढ्यःसंमतःसज्जनानाम् ।भवतिननुमनुष्योमेषराशौशशांकेशशधर
सुतदृष्टेश्रेष्ठसंपत्प्रतिष्ठः।३।नृपप्रधानःपृतनापतिर्वाकुलानुमानाद्बहुसंपदाढ्यः।भवेन्नरःकैरविणीवनेशेमेषस्थितेगी
ष्पतिनाप्रदृष्टे । ४ । योषाविभूषाधनसूनुसौख्योभोक्तासुवक्तापरिभुक्तरोषः ।स्यात्पूरुषोमेषगतेऽमृतांशौनिरीक्ष्यमाणेभृ
गुणागुणज्ञः।५।गदयुतंहृतचित्तसमुन्नतिंविगतवित्तमसत्यमसत्सुतम्।क्रियगतेऽर्कसुतेननिरीक्षितोहिमकरोहिनरंकुरु
तेखलम् । ६ ।कृषिक्रियायांनिरतोविधिज्ञःस्यान्मांत्रिकोवाहनधान्ययुक्तः । नरोनितांतंचतुरः स्वकार्येदृष्टेदिनेशेनवृषेश
शांके।७।कामातुरश्चित्तहरोऽगनानांस्यात्साधुमित्रःसुतरांपवित्रः।प्रसन्नमूर्तिश्चनरोवृषस्थेशीतद्युतौभूमिसुतेनदृष्टे।

।८। प्राज्ञंविधिज्ञंकृपयासमेतंहर्षान्वितंभूतहितेरतंच।गुणाभिराममनुजंप्रकुर्याद्वृषेशशांकःशशिजेनदृष्टः।९।जायात्म
जानंदयुतंसुकीर्तिंधर्मक्रियायांनिरतंचपित्रोः।भक्तौप्रसक्तंमनुजंप्रकुर्याद्वृषस्थितेंदुर्गुरुणाप्रदृष्टः।१०।भूषणांबरगृहा
शनशय्यागंधमाल्यचतुरांघ्रिसुखानि।आतनोतिसततंमनुजानांचंद्रमावृषगतोभृगुदृष्टः।११।कलानिधिःपूर्वदलेवृष
स्यशनीक्षितश्चेन्निधनंजनन्याः।करोतिसत्यंमुनिभिर्यदुक्तंतथापरार्धेखलुताततघातम्। १२ ।प्राज्ञंसुशीलंद्रविणेनहीनं
नंक्लेशाभिभूतंसततंकरोति।नरंचसर्वोत्सवदंप्रसूतौद्वंद्वेस्थितोभानुमताचदृष्टः॥१३।उदारदारंचतुरंचशूरंप्राज्ञंचसुज्ञं
धनवाहनाद्यैः।युक्तंप्रकुर्यान्मिथुनस्थितेंदुर्निरीक्षितोजन्मनिभूसुतेन ।१४।धीरंसदाचारमुदारसारंनरंनरेंद्राप्तधनंक
रोति।निशाधिनाथोमिथुनाधिसंस्थोनिशीथिनीनाथसुतेनदृष्टः।१५।विद्याविवेकान्वितमर्थवंतंख्यातंविनीतंसुतरांसुपु
ण्यम्।करोतिमर्त्यंमिथुनेऽधिसंस्थोनिशीथिनीशोगुरुणाप्रदृष्टः। १६ ।वस्त्रप्रसूनान्नवरांगनाभ्यःसद्वाहनेभ्यश्चविभू
षणेभ्यः।करोतिसौख्यंहिसुधामयूखोद्वंद्वस्थितोजन्मनिशुक्रदृष्टः।१७।धनांगनावाहननंदनाद्यैर्विश्लेषमायातिविगर्हि
तत्वम्।नरोहिनीहारकरेनृयुग्मेनिरीक्षितेभानुसुतेनसूतौ।१८।निरर्थकक्लेशकरंविकीर्णंनृपाश्रयंदुर्गकृताधिकारम्।कुर्या
त्कलावान्परिसूतिकालेकुलीरसंस्थोनलिनीशदृष्टः।१९।दक्षंचशूरंजननीविरुद्धंक्षीणांगयष्टिंमनुजंकरोति।कुलीरसंस्थः

परिसूतिकालदृष्टेःकलावान्किलमंगलेन॥२०॥दारार्थपुत्रोन्नतिनीतिसौख्यंसेनापतिंवासचिवंमनुष्यं । कर्काधिरूढःकु
रुतेहिमांशुर्हिमांशुपुत्रेणनिरीक्ष्यमाणः।२१।नृपाधिकारंगुणिनंनयज्ञंसुखान्वितंचारुपराक्रमंच । करोतिजातंयदिच
क्रवर्तीपीयूषमूर्तिर्गुरुणेक्ष्यमाणः।२२।सद्रत्नचामीकररत्नभूषावरांगनासौख्ययुतंनितांतं । नरंनिजागारगतःकरोति
सुधाकरःशुक्रनिरीक्ष्यमाणः।२३।सत्येनहीनंजननीविरुद्धंसदाटनंपापरतंगतार्थम् । करोतिजातंनिजगेहगामीचेद्या
मिनीशोरविजेनदृष्टः॥२४॥गुणयुतंसततंनृपतिप्रियंवरपदंचविलंघितसंततिं । हरिगतोवितनोतिनिशाकरःखरकरप्रावि
लोकनसंयुतः । २५ । नरपतेःसचिवोधनवाहनात्मजकलत्रसुखोहिभवेन्नरः । हरिणलक्ष्मणिकेसरिणिस्थितेक्षितिसु
तेनतनुप्रविलोकिते।२६।धनांगनावाहननंदनेभ्यःसुखप्रपूर्णंहिनरंकरोति । द्विजाधिराजोमृगराजसंस्थोद्विजाधिरा
जात्मजसंप्रदृष्टः।२७।बहुश्रुतंविस्मृतसाधुवृत्तंकुर्यान्नरंभूमिपतेःप्रधानम् । चंद्रोमरेंद्रोपगतोऽमरेंद्रोपाध्यायदृष्टिःप
रिसूतिकाले।२८।स्त्रीवैभवंवैगुणिनंगुणज्ञंप्राज्ञंविधिज्ञंकुरुतेमनुष्यम् ॥ पीयूषराशिर्जननेयदिस्यात्पंचाननस्थोभृगु
सूनुदृष्टः।२९।कांतावियुक्तःकृषिकर्मदक्षोदुर्गाधिकारोहिनरोल्पकार्थः ॥ सिंहोपयातेसातिशीतभानौनिरीक्षितेसूर्यसु
तेनसुतौ॥३०॥भूमीशकोशाधिकृतंसुवृत्तंभार्याविमुक्तंगुरुभक्तियुक्तम् ॥ जातंचकन्याश्रितशीतरश्मिस्तनोतिजंतुंख

ररश्मिदृष्टः ।३१॥हिंसापरंशूरतरंसकोपंनृपाश्रितंलब्धजयंरणाद्यौ। कुमारिकासंश्रितशीतभानुर्भूसूनुदृष्टोमनुजंकरोति
३२॥ज्योतिर्विद्याकाव्यसङ्गीतविद्यंप्राज्ञंयुद्धेलब्धकीर्तिंविनीतम्। कुर्यान्नूनंमानवंमानवंतंकन्यास्थश्चेच्चंद्रजेनप्रदृष्टः
।३३। भूरिबंधुमवनीपतिप्रियंचारुवृत्तशुभकीर्तिसंयुतम्। मानवंहिकुरुतेंगनाश्रितश्चंद्रमाःसुरपुरोहितेक्षितः। ३४।
विलासिनीकेलिविलासचित्तंकांताश्रितंभूपतिलब्धवित्तम्। कुर्यान्नरंशीतकरःकुमार्यांसंस्थःसितेनप्रविलोकितश्च ।३५।
निष्किंचनंहीनमतिंनितांतंस्त्रीसंश्रयाद्दासधनंजनन्या। हीनंप्रकुर्यात्खलुकन्यकायांगतोमृगांकोऽर्कसुतेनदृष्टः। ३६।
सदाटनःसौख्यधनैर्विहीनःसदंगनासूनुजनैर्विहीनः। मित्रैरमित्रैश्चनरोतितप्तस्तुलाधरेशीतकरेऽर्कदृष्टे।३७। बुद्ध्या
परार्थकरणैकचित्तंमायासमेतंत्रिषयाभितप्तम्। करोतिजातंहितुलागतेंदुर्निरीक्ष्यमाणोधरणीसुतेन। ३८। कलावि
धिज्ञंधनधान्ययुक्तंवक्तृत्वविद्याविभवैःसमेतम्। कुर्यान्नरंशीतकरस्तुलास्थःप्रसूतिकालेशशिजेनदृष्टः। ३९। विचक्षणो
वस्त्रविभूषणेषुक्रयेथवाविक्रयताविधाने। तुलाधरेशीतकरेनरःस्याद्दृष्टेशुनासीरपुरोहितेन। ४०। प्राज्ञस्त्वनेकोद्यम
साधितार्थःस्यात्पार्थिवानांकृपयासमेतः। दृष्टोनरःशीतकलेवरश्चजूकेमृगांकेभृगुजेनदृष्टे।४१। धनैश्चधान्यैर्वरवाहनैश्च
युतोऽपिहीनोविषयोपभोगैः। भवेन्नरस्तौलिनिजन्मकालेकलानिधौभानुतनूजदृष्टे। ४२। सद्वृत्तहीनंधानिनंजनानाम

सह्यमत्यंतकृतप्रयासम् । वलीनिवासंमनुजंप्रकुर्यात्ताराधिपःकौर्प्यगतोऽर्कदृष्टः । ४३ । रणांगणावाप्तयशोविशेषोग
भीरतागौरवसंयुतश्च । भूपानुकंपासमुपात्तवित्तोनरोऽलिनींदौक्षितिजेनदृष्टे ।४४। वाग्विलासकुशलोरणशीलोगीतिनृ
त्यनिरतश्चनितांतम् । कूटकर्मणिनरोनिपुणःस्याद्वृश्चिकेशशिनिचंद्रजदृष्टे ।४५। लोकानुरूपःसुतरांसुरूपःसत्कर्मकृ
द्वित्तविभूषणाढ्यः । स्यान्मानवोजन्मनिशीतरश्मौसंस्थेऽलिनीज्येननिरीक्ष्यमाणे । ४६ । प्रसन्नमूर्त्तिःसमुदारकीर्त्तिःकू
टक्रियाज्ञोधनवाहनाढ्यः । कांताहृतार्थःपुरुषोऽलियातेशीतद्युतौदैत्यगरुप्रदृष्टे ।४७। स्थानभ्रंशंदैन्यनाशाल्पवित्तंनी
चापत्यासत्वयक्ष्मप्रकोपम् । कुर्याच्चंद्रःसूतिकालेऽलिसंस्थेछायापुत्रप्रेक्षणत्वंप्रयातः ।४८। प्रौढप्रतापोत्तमकीर्तिसंपत्स
द्वाहनान्याहवजंजयंच । नृपप्रसादंकुरुतेनराणांताराधिपश्चापगतोऽर्कदृष्टः । ४९ ।सेनापतित्वंचमहत्प्रतापंपद्मालया
लंकरणोपलब्धिम् । कुर्यान्नराणांहरिणांकएषःशरासनस्थोऽवनिजेनदृष्टः । ५० । सद्वाग्विलासंबहुभृत्ययुक्तंकुर्यान्नरं
ज्योतिषशिल्पविद्यम् । तुरंगजंघेहिकुरंगजन्माकुरंगलक्ष्मप्रभवेणदृष्टः ।५१। महत्पदस्थोधनवान्सुवृत्तोभवेन्नरश्चारु
शरीरयष्टिः । धनुर्धरेशीतकरेप्रयातेनिरीक्षितेशक्रपुरोहितेन ।५२। संतानार्थात्यंतसंजातधर्मःसश्वत्सौख्येनान्वितोमा
नवःस्यात् । तारास्वामीचापगामीप्रसूतौदैत्यामात्यप्रेक्षणत्वंप्रयातः । ५३ । सत्त्वोपेतंनित्यशास्त्रानुरक्तंसद्वक्तारंमानवं

चप्रचंडम् । कोदंडस्थस्तीक्ष्णरश्म्यात्मजेनदृष्टःसूतौशीतरश्मिःकरोति ।५४। गतधनोमलिनश्चलनप्रियोहतमतिःख
लुदुःखितमानसः। हिमकरेमकरेचदिवाकरेक्षितितनौहिनरःप्रभवेद्यदि ।५५। अतिप्रचंडोधनवाहनाढ्यः प्राज्ञश्चदारा
त्मजसौख्ययुक्तः ।स्यान्मानवोवैभवभाङ्नितांतंमृगेमृगांकेऽवनिसूनुदृष्टे ।५६। बुद्ध्याहीनोनिर्धनस्त्यक्तगेहोगेहि
न्याद्यैरुज्झितःपूरुषःस्यात् । आकोकेरःस्थावरेशीतरश्मौपीयूषांशोरात्मजेनप्रदृष्टे । ५७। नृपात्मजःसत्ययुतोगुणज्ञः
कलत्रपुत्रादियुतोनरःस्यात् । मृगाननेजन्मनियामिनीशेवाचामधीशेननिरीक्ष्यमाणे ।५८। सुनयनोधनवाहनसंयुतःसु
तविभूषणवस्त्रसुखोनरः। कुमुदिनीदयितेमृगसंस्थितेभृगुसुतेनजनोननुवीक्षिते । ५९ । महालसोमंदधनस्त्वसत्योमली
मसःस्याद्व्यसनाभिभूतः । पीयूषमूर्तिर्यदिनक्रवर्तीत्रिमूर्तिपुत्रेणनिरीक्ष्यमाणः।६०। कृषीवलःकैतवसंयुतश्चनृपाश्रितो
धर्मरतोनरःस्यात् । पीयूषमूर्त्तिर्यदिकुंभगामीत्वंभोजिनीस्वामिनिरीक्ष्यमाणः ।६१। धनभवनजनित्रीतातविश्लेषयुक्तो
विषमतमपदार्थोत्पादकाऽनल्पजल्पः। भवतिमलिनचित्तोत्यंतधूर्तोहिमर्त्यःशशिनिकलशयातेवीक्षितेभूसुतेन ।६२।
विषयसौख्यरतोशनसंविधारुचिरतविशुचिःप्रियभाषणःयुवतिगीतसुनीतकृतादरोघटगतेंदुरिहज्ञनिरीक्षितः।६३।म
हीपुरग्रामसुखादिसौख्यंभोगान्वितंसाधुजनप्रवृत्तिम्।कुर्यान्नरंश्रेष्ठतरंघटस्थोनिशाकरःशक्रगुरुप्रदृष्टः।६४।मित्रात्मज

स्त्रीगृहसौख्यहीनोदीनोजनोत्सारितगौरवःस्यात् । निशाकरेकुंभधरेप्रसूतौसंवीक्षितेदानवपूजितेन।६५।नखोष्ट्रवाला
श्वतरादिलाभकृत्स्त्रीरतंधर्मविरुद्धवृत्तिम् । करोतिपुंसांहिघटेधितिष्ठन्निशाकरोभास्करसूनुदृष्टः ।६६। मनोभवोत्कर्षम
तीवसौख्यंसेनापतित्वंबहुवित्तवृद्धिम् । सत्कार्यसिद्धिंकुरुतेहिमांशुर्झषेदिनेशेननिरीक्ष्यमाणः ।६७। पराभिभूतंकुलटा
धिसख्यंसौख्योज्झितंपापरतंनितांतम् । करोतिजातंहिनिधिःकलानांमीनस्थितोभूमिसुतेनदृष्टः ।६८ ।वारांगनासूनुसु
खानिनूनंमानंधनंभूमिपतेःप्रसादम् । कुर्यान्नराणांहरिणांकएषत्रैसारिणस्थोज्ञनिरीक्ष्यमाणः । ६९ । उदारदेहंसुकुमार
देहंसद्गूहिनीसूनुधनादिसौख्यम् ।नृपंविदध्यात्पृथुरोमगामीतमीपतिर्वाक्पतिवीक्षितश्चेत् ।७०।सद्गीतवाद्यादिरतंसु
वृत्तंविलासिनीकेलिविलासशीलम् । करोतिमर्त्यंतिमियुग्मसंस्थःशीतद्युतिर्जन्मनिशुक्रदृष्टः ।७१।कामातुरंदारसुतैर्विहि
नंनीचांगनासख्यमविक्रमंच । नीहाररश्मिःशफरंप्रपन्नोनरंविदध्याद्रविसूनुदृष्टः ।७२। इतिचंद्रप्रतिग्रहदृष्टयः । अ
थस्वभेभौमेदृष्टयः । प्राज्ञःसुवक्तापितृमातृभक्तोधनीप्रधानोऽतितरामुदारः । नरोभवेदात्मगृहेमहीजेसरोजिनीराजनि
रीक्ष्यमाणे । १ । अन्यांगनासक्तमतीवशूरंकृपाविहीनंहतचोरवर्गम् । नरंप्रकुर्यान्निजधामगोभूमीतनूजोद्विजराजदृष्टः
। २ । पण्यांगनालंकरणकवृत्तिर्विचक्षणोऽन्यद्रविणापहारी । भवेन्नरःस्वर्क्षगतेप्रसतौक्षोणीसूतेसोमसुतेनदृष्टे । ३ ।

वंशेवनीशोधनवान्सकोपोनृपोपचारःकृतचौरसख्यः।आरेनिजागारगतेनरःस्यात्सूतौसुराचार्यनिरीक्ष्यमाणे।४। भूयोभू
योभोजनौत्सुक्यसक्तःकांताहेतोर्यानचिंतानितांतम्। प्राणीपुण्येकर्मणिप्रीतिमान्स्यात्स्वर्क्षेभौमेभार्गवेणप्रदृष्टे।५।मि
त्रोज्झितंमातृवियोगतप्तकृशांगयष्टिंविषमंकुटुंबे। ईर्ष्याविशेषंपुरुषंविदध्यात्कुजःस्वभेस्थोऽर्कसुतेनदृष्टः।६। इतिस्व
भेभौमेदृष्टयः। अथशुक्रगृहस्थेभौमेग्रहदृष्टयः। कांतामनोवृत्तिविहीनमुच्चैर्वनाद्रिसंस्थानरुचिंविपक्षम्। प्रचंडकोपंकुरु
तेमनुष्यंकुजःसितागारगतोऽर्कदृष्टः।१।अंबाविरुद्धःखलुयुद्धभीरुर्बह्वंगनानामपिनायकश्च। स्यान्मानवोभूतनयेसितर्क्षे
नक्षत्रनाथेननिरीक्ष्यमाणे।२। शास्त्रप्रवृत्तिःकलहप्रियःस्यादनल्पजल्पोऽल्पधनागमश्च। सत्कायकांतिःपरिसूतिकाले
सितालयस्थेशशिजेनदृष्टे।३।बंधुप्रियेस्यान्निरतोऽतिभाग्यःसद्गीतनृत्यादिविधिप्रवीणः।क्षोणीतनूजेभृगुजर्क्षयातेसं
वीक्षितेवाक्पतिनाप्रसूतौ।४। सुश्लाघ्यनामाक्षितिपालमंत्रीसेनापतिर्वाबहुसौख्ययुक्तः। स्यान्मानवःशुक्रगृहोपयाते
निरीक्षितेभूमिसुतेसितेन।५। ख्यातोविनीतोधनवान्सुमित्रःपवित्रबुद्धिःकृतशास्त्रयत्नः।नरःपुरग्रामपतिःसितर्क्षेभूनंद
नेभानुसुतेनदृष्टे।६।इतिशुक्रभवनस्थेभौमेदृष्टयः।अथबुधभवनस्थेभौमेग्रहदृष्टयः।विद्याधनैश्वर्ययुतःससत्वमरण्यदु
र्गाचलकेलिशीलम्। कुर्यान्नरंसोमसुतालयस्थःक्षोणीसुतःसूर्यनिरीक्ष्यमाणः।१।संरक्षणेभूपतिनानियुक्तंकांतारतिंसत्व

युतंसतोषं। भूमीसुतःसंजनयेन्मनुष्यंबुधर्क्षसंस्थःशशिनाप्रदृष्टः।२। अनल्पजल्पंगणितप्रगल्भंकाव्यप्रियंचानृतचारु
वाक्यम्। दौत्येप्रयासैःसहितंप्रकुर्याद्धरातनूजोज्ञगृहेज्ञदृष्टः।३। अन्यदेशगमनंव्यसनाद्यैःसंयुतंहिकुरुतेनरमुच्चैः सो
मसूनुभवनेऽवनिसूनुर्दानवारिसचिवेनचदृष्टः।४। वस्त्रान्नपानीयसुखैःसमेतंकांताप्रसक्तंसुतरांसमृद्धम्। कुर्यान्नरोभूमि
सुतोबुधर्क्षसंस्थःप्रदृष्टोभृगुनंदनेन।५। अतीवशूरोमलिनोऽलसश्चदुर्गाचलारण्यविलासशीलः। भवेन्नरोभास्करसुनु
दृष्टेधरासुतेसोमसुतालयस्थे।६। इतिबुधभवनस्थभौमेग्रहदृष्टयः। अथकर्कस्थभौमेग्रहदृष्टयः। पित्तप्रकोपार्तियुतो
ऽतिधीरोदंडाधिकारीसुतरांमहौजाः। भवेन्नरःकर्कगतेमहीजेनिरीक्ष्यमाणेरविणाप्रसूतौ।१। गदाभिभूतोगतवस्तुशोको
विहीनवेषोगतसाधुवृत्तः। भवेन्नरःकर्कटगेमहीजेसोमेनसूतौचनिरीक्ष्यमाणे। २। मित्रैर्विमुक्तोऽल्पकुटुंबभारःपापप्रचा
रःखलचित्तवृत्तिः। बुधेनदृष्टेसतिकर्कटस्थेभौमेनरःस्याद्व्यसनाभिभूतः। ३। नरेंद्रमंत्रीगुणगौरवाढ्योमान्योवदान्योमनु
जःप्रसिद्धः। कुलीरसंस्थेतनयेधरित्र्यानिरीक्षितेचित्रशिखंडिजेन। ४। अर्थक्षयोदुर्व्यसनेननूनंनिरंतरानर्थसमुद्भवः
स्यात्। भवेन्नराणांभृगुणाप्रदृष्टेत्वंगारकेकर्कटराशिसंस्थे।५। कीलालधान्यादिधनःसुकांतिर्महीपतिप्राप्तधनोमनुष्यः।
महीसुतेकर्कटराशियातेनिरीक्षितेसूर्यसुतेनसूतौ।६। इतिकर्कस्थभौमेग्रहदृष्टयः। अथसिंहस्थभौमेग्रहदृष्टयः। हितप्रक

तोऽभिमतेषुनूनांद्विषज्जनानामहितप्रदाता।वनाद्रिकुंजेषुकृतप्रचारःसिंहेमहीजेरविणाप्रदृष्टे।१। प्रपुष्टमूर्तिःकाठिनस्व
भावश्चांवाविनीतोनिपुणःस्वकार्ये।तीव्रःपुमांश्चारुमतिः प्रसूतौसिंहेमहीजेद्विजराजदृष्टे।५।सत्काव्यशिल्पादिकला
कलापेऽभिज्ञोऽपिलुब्धश्चलचित्तवृत्तिः । स्वकार्यसिद्धौनिपुणोनरःस्यात्सिंहेमहीजेशशिजेनदृष्टे।प्रशस्तबुद्धिर्नृपतेः
सुहृच्चसेनाधिनाथोऽभिमतोबहूनाम्।विद्याप्रवीणोहिनर :प्रसूतौजीवेक्षितेसिंहगतेमहीजे।४।गर्वोन्नतोऽत्यंतशरीरकां
तिर्नानांगनाभोगयुतःसमृद्धःभूमीसुतेसिंहगतेप्रसूतौनिरीक्षितेदैत्यपुरोहितेन।५।भवेन्निवासोऽन्यगृहेऽतिचिंतावृद्धा
कृतिर्लद्रविणोज्झितत्वम्।भवेन्नराणांधरणीतनूजेसिंहस्थितेभानुसुतेनदृष्टे।६। इतिसिंहस्थितेभौमेग्रह०।अथजीवभ
वनस्थभौमेग्रहदृष्टयः। वनाद्रिदुर्गेषुकृताधिवासंक्रूरंसभाग्यंजनपूजितंच।करोतिजातंधरणीतनूजोजीवर्क्षयातस्तरणि
प्रदृष्टः।१।विद्वद्विधिज्ञंन्नृपतेरसह्यंकलिप्रियंसर्वनिराकृतंच।प्राज्ञंप्रकुर्यान्मनुजंधराजोजीवर्क्षगःशीतकरप्रदृष्टः।२।
प्राज्ञंचशिल्पेनिपुणंसुशीलंसमस्तविद्याकुशलंविनीतम्।करोतिजातंखलुलोहितांगःसौम्येनदृष्टोगुरुगेहयातः। ३ ।
कांतातिचिंतासहितंनितांतमरातिवर्गैःकलहानुरक्तम्।स्थानच्युतंभूमिसुतःप्रकुर्याज्जीवेक्षितोजीवगृहाधिसंस्थः।४।
उदारचेताविषयानुसक्तोविचित्रभूषापरिभूषितश्च।भाग्यान्वितःस्यात्पुरुषोवनीजेजीवर्क्षगेदानवपूज्यदृष्टे।५।काय

कांतिरहितश्चानितांतंस्थानसंचलरतोऽपिचदुःखी। अन्यकर्मनिरतश्चनरःस्याज्जीवधाम्निकुसुतेऽर्कजदृष्टे।६। इतिजी
वभवनस्थभौमेग्रहदृष्टयः। अथशन्यगारगतभौमेग्रहदृष्टयः। कलत्रपुत्रार्थसुखैःसमेतंश्यामंसुतीक्ष्णंसुतरांचशूरम्।
कुर्यान्नरंभूतनयोऽर्कदृष्टश्चार्कात्मजागारगतःप्रसूतौ।१। सद्दूषणंमातृसुखेनहीनंस्थानच्युतंचंचलसौहृदंचाउदाराचि
त्तंप्रकरोतिजातंकुजोऽर्कदृष्टेशशिनाप्रदृष्टः।२। प्रियोक्तियुक्तोऽटनलब्धवित्तःसत्वान्वितःकैतवसंयुतश्च। अभीर्नरोमंद
गृहंप्रयातेपृथ्वीसुतेचंद्रसुतेनदृष्टे।३। दीर्घायुषंभूपकृपागुणाढ्यंबंधुप्रियंचारुशरीरकांतिम्। कार्यप्रलापंजनयेन्मनुष्यं
जीवेक्षितोमंदगृहेमहीजः।४। सद्भोगसौभाग्यसुखैःसमेतःकांताप्रियोऽत्यंतकलिप्रियश्च। क्षोणीसुतेमंदगृहंप्रयातेनि
रीक्ष्यमाणेभृगुणानरःस्यात्।५। नृपाप्तवित्तोवनिताविषादोबहुश्रुतोऽत्यंतनतिःसकष्टः। रणप्रियःस्याद्धरणीतनूजेमं
देक्षितेमंदगृहंप्रयाते।६। इतिमंदागारगतभौमेग्रहदृष्टयः। अथभौमगेहेबुधेग्रहदृष्टयः। बंधुप्रियंसत्यवचोविलासं
नृपालसद्गौरवसंयुतंचाकरोतिजातंक्षितिसूनुगेहेसंस्थोबुधोभानुमताप्रदृष्टः।१। सद्गीतनृत्यादिरुचिःप्रकामंकांतारतिर्वा
हनभृत्ययुक्तः। कौटिल्यभाक्स्यान्मनुजःकुजर्क्षेसोमात्मजेशीतकरप्रदृष्टे।२। भूपप्रियंभूरिधनंचशूरंकलाप्रवीणंकलहो
द्यतंच। क्षुधान्वितंसंजनयेन्मनुष्यंसौम्यःकुजर्क्षेकुसुतेनदृष्टः।३। सुखोपपन्नंचतुरंसुवाक्यंकांतासुताद्यैःसहितंप्रसन्नम्।

करोतिमर्त्यंकुजगेहगामीसोमात्मजोवाक्पतिनाप्रदृष्टः ।४। कांता विलासंगुणगौरवाढ्यंसुहृत्प्रियंचारुमतिंविनीतम् ।करो
तिजातंशशिजःकुजर्क्षेसंस्थश्चशुक्रेणनिरीक्ष्यमाणः ।५। सुसाहसंचोग्रतरस्वभावंकुलोत्कलिप्रीतिमसाधुवृत्तिम् ।करो
तिमर्त्यंहरिणांकसूनुर्भौमर्क्षसंस्थःशनिनाप्रदृष्टः ।६। इति भौमगेहेबुधेग्रहदृष्टयः । अथबुधेशुक्रगेग्रहदृष्टयः । दारिद्र्य
दुःखामयतप्तदेहंपरोपकाराभिरतंनितांतम् ।शांतंसुचित्रंपुरुषंप्रकुर्यात्सौम्योभृगुक्षेत्रयुतोऽर्कदृष्टः ।१। बहुप्रपंचंधनधा
न्ययुक्तंदृढव्रतंभूमिपतिप्रधानम् ।ख्यातंप्रकुर्यान्मनुजंहिसौम्यःशुक्रर्क्षसंस्थःशशिनाप्रदृष्टः । २ ।राजापमानादिग
दप्रतप्तंत्यक्तंसुहृद्भिर्विषयैश्चनूनम् ।कुर्यान्नरंसोमसुतःसितर्क्षेसंस्थोधरापुत्रनिरीक्ष्यमाणः । ३ । देशोत्तमग्रामपुराधि
राजंप्राज्ञंगुणज्ञंगुणिनंसुशीलम् ।कुर्यान्नरंचंद्रसुतःसितर्क्षेसंस्थःसुराचार्यनिरीक्ष्यमाणः ।४। अतिसुललितवेषंवस्त्रभूषा
विशेषैर्युवतिजनमनोज्ञंमन्मथोत्कर्षहर्षम् ।अतिचतुरमुदारंचारुभाग्यंप्रकुर्याद्भृगुगृहगतसौम्योभार्गवेणप्रदृष्टः ।५।
कलत्रपुत्रात्मजयानपीडासंतप्तचित्तंसुखवित्तहीनम् ।कुर्यान्नरंशत्रुजनाभिभूतंमंदेक्षितोज्ञःसितधामगामी ।६। इति
शुक्रर्क्षगेग्रहदृष्टयः ।अथस्वक्षेत्रस्थबुधंप्रतिग्रहदृष्टयः ।सत्योपेतंचारुलीलाविलासंभूमीपालात्प्राप्तमानोन्नतिंच ।
चंचल्लक्ष्मींचापिकुर्यान्मनुष्यंस्वक्षेत्रस्थश्चंद्रपुत्रोऽर्कदृष्टः ।१। अनल्पजल्पोऽमृततुल्यभाषीकलिप्रियोराजसमीपवर्ती ।

भवेन्नरःसोममुतेस्वगेहेनिरीक्ष्यमाणेमृगलांच्छनेन। २। प्रसन्नगात्रंकुटिलंकलाज्ञंनरेंद्रकृत्येसुतरांप्रवीणम्। जनाप्रि
यंसंजनयेन्मनुष्यंभौमेक्षितोज्ञःस्वगृहेधिसंस्थः। ३। बह्वर्थसामर्थ्यविराजमानंसद्राजमानाप्तपदाधिकारम्। सुतंप्र
कुर्यान्निजमंदिरस्थःसौम्यप्रदृष्टःसुरपूजितेन। ४। नरेंद्रदूतोविजितारिवर्गःसंधिक्रियामार्गविधिप्रगल्भः। वारांग
नासक्तमनोभिलाषःशुक्रेक्षितज्ञेनिजभेनरःस्यात्। ५। प्रारंभसिद्धिंविनयंविशेषात्सद्वस्त्रभूषादिसमृद्धिमुच्चैः। कुर्यान्नरा
णाममृतांशुजन्मास्वमंदिरस्थोरविसूनुदृष्टः। ६। इतिस्वक्षेत्रस्थबुधंप्रतिग्रहदृष्टयः। अथकुलीरगामिनिबुधेग्रहदृ
ष्टयः। वस्त्रादिशुद्धौमणिसंग्रहेचगृहादिनिर्माणविधौप्रवीणः। प्रसूनमालाग्रथनेऽपिमर्त्यःकुलीरगेज्ञेनलिनीशदृष्टे। १।
कांतानिमित्ताप्तमहद्व्यलीकोद्रव्यव्ययात्यंतकृशांगयष्टिः। बहूपसर्गोऽपिभवेन्मनुष्यःकुलीरगेज्ञेशशिनाप्रदृष्टे। २।
स्वल्पश्रुतंचार्थरतंचशूरंप्रियंवदंकूटविधौप्रवीणम्। कुर्यान्नरंशीतकरस्यसूनुःकुलीरसंस्थोऽवनिसूनुदृष्टः। ३। प्राज्ञोवि
धिज्ञोविधिनातिशालीसद्वाग्विलासोऽवनिपालमान्यः। स्यान्मानवोजन्मनिसोमसूनौकुलीरगामिन्यमरेज्यदृष्टे। ४।
प्रियंवदश्चारुशरीरभाक्चसद्गीतवाद्यादिविधौप्रवीणः। स्यान्मानवोदानववंद्यदृष्टेकर्कटकस्थेऽमृतभानुसूनौ। ५।
गुणैर्विहीनंस्वजनैर्वियुक्तमलीकदंभानुरतंकृतघ्नम्। करोतिमर्त्यंपरिसूतिकालेकुलीरगोज्ञोरविजेनदृष्टः। ६। इतिकुली

काम०

रगामिनिबुधेगृहे ०। अथसिंहगतेबुधेगृहदृष्टयः। कृपाविहीनंचचलस्वभावंसेर्ष्यंचहिंसाभिरतंचरौद्रम्। क्षुद्रंप्रकुर्यान्म
नुजंप्रसूतौबुधोर्कदृष्टोमृगराजसंस्थः।१। रूपान्वितंचारुमतिंविनीतंसंगीतनृत्याभिरतंनितांतम्। सद्वृत्तवृत्तंकुरुतेहिम
र्त्यंचंद्रेक्षितःसिंहगतोबुधाख्यः।२। कंदर्पसत्वोज्झितमुक्तवृत्तंक्षतांकितंहीनमतिंविचित्रम्। सुदुःखितंसंजनयेत्पुमांसं
भौमेक्षितःसिंहगतःशशीजः।३। कोमलामलरुचिःकुलवर्यश्चारुलोचनयुतश्चसमर्थः। वाहनोत्तमधनोमनुजःस्यादिंदु
जेहरिगतेगुरुदृष्टे।४। सद्रूपशालीप्रियवाग्विलासोनृपाश्रितोवाहनवित्तयुक्तः। भवेन्नरःसोमसुतप्रसूतौसिंहस्थितेदा
नववंद्यदृष्टे।५। स्वेदोद्गमोद्भूतमहोग्रगंधविस्तीर्णगात्रंचकुरूपमुग्रम्। सुखेनहीनंमनुजंप्रकुर्यान्मंदेक्षितःसिंहगतोयदि
ज्ञः।६। इतिसिंहगतेबुधेगृहदृष्टयः। अथगुरुभवनस्थेबुधेखेटदृष्टयः। शूलाश्मरीभिर्हनिपीडितांगोभंगोज्झितःशांतिमु
पागतश्च। स्यात्पूरुषोगीष्पतिवेश्मसंस्थेनिशीथिनीस्वामिसुतेऽर्कदृष्टे।१। लेखक्रियायांसुतरांप्रवीणःसुसंगतःसाधुसुहज्ज
नानाम्। नरःसुखीशीतमयूखपुत्रेचंद्रेक्षितेजीवगृहंप्रयाते।२। परंपराचोरवनस्थितानांस्युर्लेखकाधान्यधनैर्विहीनाः।
नरास्तुनीहारकरप्रसूतौजीवालयेमंगलदृष्टदेहे।३। विज्ञानशालीस्वकुलावतंसोनृपालकोशालयलेखकर्ता। भर्ताबहूनां
मनुजस्तुसौम्येजीवेक्षितेजीवगृहंप्रयाते।४। भूपामात्यापत्यलेखाधिकारंचौर्यासक्तंसौकुमार्येणयुक्तम्। द्रव्योपेतंमान

वंसोमसूनुर्जीवर्क्षस्थःशुक्रदृष्टःकरोति । ५ । बव्हन्नभोक्तामलिनःकुवृत्तःकांतारदुर्गाचलवासशीलः । कार्योपयुक्तो
नभवेन्मनुष्योजीवर्क्षगेज्ञेर्कसुतेनदृष्टे ।६। इतिजीवगृहस्थेबुधेखेटदृष्टयः । अथशन्यालयगामिनिज्ञखेचरदृष्टयः ॥
प्रारब्धकार्याकलितप्रतापंसन्मल्लविद्याकुशलंकुशीलम् । कुटुंबिनंसंजनयेन्मनुष्यंबुधःशनिक्षेत्रगतोऽर्कदृष्टः ।१।जलो
पजीवीधनवांश्चभीरुःप्रसूनकंदोद्यमतत्परश्च। पुमान्भवेद्भानुसुतालयस्थेबुधेसुधारश्मिनिरीक्ष्यमाणे।२। व्रीडालसस्त
ब्धतरस्वभावःसौम्यःसुखीवाक्चपलोऽर्थयुक्तः । स्यान्मानवोभानुसुतर्क्षसंस्थेदृष्टेब्जसूनौक्षितिनंदनेन।३।धान्यवाहन
धनान्वितःसुखीग्रामपत्तनपतिर्महामतिः । भानुसूनुभवनेब्जनंदनेदेवदेवसचिवेक्षितेनरः । ४ । बहुप्रजासंजनकंकुरूपं
प्राज्ञोज्झितंनीचजनानुयातम् ।कामाधिकंसंजनयेन्मनुष्यंशुक्रेक्षितोज्ञःशनिगेहसंस्थः।५।सुखोज्झितंपापरतंचदीनम
किंचनंहीनजनानुयातम् ।करोतिमर्त्यंशनिधामगामीसौम्यस्तमोहंतृसुतेनदृष्टः।६। इतिशन्यालयगामिनिबुधेखेचरदृ
ष्टयः। अथभौमर्क्षगेगुरौग्रहदृष्टक्षः ।असत्यभीरुर्बहुधर्मकर्तास्यातश्चसद्भाग्ययुतोविनीतः।भवेन्नरोदेवगुरौप्रयातेभौ
मस्यगेहेरविदृष्टदेहे ।१। ख्यातोविनीतोवनितानुयातःसतांमतोधर्मरतःप्रशांतः।जातोभवेद्भूमिसुतर्क्षयातेवाचांपतौशी
तकरेणदृष्टे ।२। क्रूरोतिधूर्तःपरगर्वहर्तानृपाश्रयाज्जीवनवृत्तिकर्ता। भर्ताबहूनांननुनानवःस्यात्जीवेकुजर्क्षेचकुजेनदृष्टे

।३।सद्वृत्तसत्योत्तमवाग्विहीनश्छिद्रप्रतीक्षीप्रणतानुयातः।मर्त्योभवेत्कैतवसंप्रयुक्तोवाचस्पतौभौमगृहेज्ञदृष्टे।४।
गंधमाल्यशयनासनभूषायोषिदंबरनिकेतनसौख्यम्।संप्रयच्छतिनृणांभृगुणाचेद्वीक्षितःसुरगुरुःकुजसंस्थः। ५।लु
ब्धंरौद्रंसाहसैःसंयुतंचमित्रापत्योद्भूतसौख्योज्झितंच।कुर्यान्मंत्रेनिष्ठुरंदेवमंत्रीधात्रीपुत्रक्षेत्रगोमंददृष्टः।६।इतिभौ
मर्क्षगेगुरौग्रहदृष्टयः।अथशुक्रागारस्थेगुरौग्रहदृष्टयः।संगतप्तंविजयंक्षतगात्रंसामयंचबहुवाहनभृत्यम्।मंत्रिणांहि
कुरुतेसुरमंत्रीदैत्यमंत्रिगृहगोरविदृष्टः।१।सत्येनयुक्तंसततंविनीतंपरोपकाराभिरतंसुचित्तम्।सद्भाग्यभाजंकुरुतेम
नुष्यंजीवःसितर्क्षेऽमृतरश्मिदृष्टः।२।भाग्योपपन्नंसुतसौख्यभाजंप्रियंवदंभूपतिलब्धमानम्।नरंसदाचारपरंकरोति
भौमेक्षितेज्योभृगुजालयस्थः।३।सन्मंत्रविद्यानिरतंनितांतंभाग्यान्वितंभूपतिलब्धवित्तम्।चंचत्कलाज्ञंपुरुषंप्रकुर्या
द्गुरुर्भृगुक्षेत्रगतोज्ञदृष्टः।४।धनान्वितंचारुविभूषणाढ्यंसद्वृत्तचित्तंविभवैःसमेतम्।करोतिमर्त्यंसुरराजमंत्रीशुक्राल
यस्थोभृगुसूनुदृष्टः।५।सत्पुत्रदारादिसुखैरुपेतंप्राज्ञंपुरग्रामभवोत्सवाढ्यम्।नरंप्रकुर्याच्चतुरंसुरेज्योदैत्येज्यभस्थोऽर्कसु
तेनदृष्टः।६।इतिशुक्रागारस्थेगुरौग्रहदृष्टयः।अथबुधवेश्मसंस्थेगुरौखगदृष्टयः।सत्पुत्रदारंधनमित्रसौख्यंश्रेष्ठ
प्रतिष्ठाप्तंविराजमानम्।नरंप्रकुर्यात्सुरराजमंत्रीरविप्रदृष्टोबुधवेश्मनिस्थः।१।गुणान्वितंग्रामपुरोपकारंविराजमा

नंबहुगौरवेण। कुर्यान्नरंदेवगुरुर्बुधर्क्षेसंस्थोनिशानाथनिरीक्ष्यमाणः।२। संग्रामसंप्राप्तजयंक्षतांगंधनेनसारेणसम
न्वितंच। करोतिजातंविबुधेंद्रमंत्रीबुधालयस्थःक्षितिसूनुदृष्टः।३। सन्मित्रदारात्मजवित्तसौख्योदक्षोभवेज्ज्योतिष
शिल्पवेत्ता। स्याच्चारुभाषीपुरुषःप्रकामंजीवेबुधर्क्षेचबुधेनदृष्टे।४। धनांगनासूनुसुखैरुपेतःप्रासादवापीकृषिकर्मचित्तः
भवेत्प्रसन्नःपुरुषःसुरेज्येदैत्येज्यदृष्टेबुधवेश्मसंस्थे।५। नरेंद्रसद्गौरवसंप्रयुक्तंनित्योत्सवंपूर्णगुणाभिरामम्। नरं
पुरग्रामपतिंकरोतिगुरुर्ज्ञगेहेशनिनाप्रदृष्टः।६। इतिबुधवेश्मसंस्थेगुरौग्रहदृष्टयः। अथकुलीरसंस्थेगुरौग्रहदृष्टयः॥
दारात्मजार्थोद्भवसौख्यहानिःपूर्वंचपश्चात्खलुतत्सुखानि। कुर्यान्नराणांहिगुरुःसुराणांकुलीरसंस्थोरविणाप्रदृष्टः।१।
नरेंद्रकोशाधिकृतिंसुकांतिंसद्वाहनार्थादिसुखोपपन्नम्। सद्वृत्तचित्तंजनयेन्मनुष्यंकर्कस्थितेज्योशशिनाप्रदृष्टः।२।
कुमारदारांबरचारुभूषाविशेषभाजंगुणिनंचशूरम्। प्राज्ञंक्षतांगंकुरुतेमनुष्यंकर्कस्थितेज्योऽवनिजेनदृष्टः।३।
मित्राश्रयोत्पादितसर्वसिद्धिःसद्वृत्तबुद्धिर्विलसत्प्रतापः। मंत्रीनरःकर्कटराशिसंस्थेगीर्वाणवंद्येशशिसूनुदृष्टे।४। बव्हंग
नावैभवमंगनानांनानासुखानामुपलब्धयःस्युः। कुलीरयातेवचसामधीशेनिरीक्षितेदैत्यपुरोहितेन।५। सन्मानभूषा
गुणचारुशीलःसेनापुरग्रामपतिर्नरःस्यात्। अनल्पजल्पःखलुकर्कटस्थेवाचस्पतौसूर्यसुतेनदृष्टे।६। इतिगुरौकुलीरस्थे

ग्रहाणांदृष्टयः। अथसिंहयातेज्येग्रहदृष्टिः। व्ययान्वितंस्यातमतीवधूर्तंनृपाप्तवित्तंशुभकर्मचित्तम्। नरंप्रकुर्यात्सुररा
जपूज्यःसूर्येणदृष्टोमृगराजसंस्थः। १। प्रसन्नमूर्त्तिंगतचित्तशुद्धिंस्त्रीहेतुसंप्राप्तधनंवदान्यम्। कुर्यात्पुमांसंवचसामधी
शःशशांकदृष्टःकरिवैरिसंस्थः। २। मान्योगुरूणांगुरुगौरवेणसत्कर्मनिर्माणविधौप्रवीणः। प्राणीभवेत्केसरिणिस्थिते
स्मिन्गीर्वाणवंद्येवनिजेनदृष्टे। ३। गृहादिनिर्माणविधौप्रवीणोगुणाग्रणीःस्यात्सचिवोनृपाणाम्। वाणीविलासेचतुरो
नरःस्यात्सिंहस्थितेदेवगुरौज्ञदृष्टे। ४। भूमीपतिप्राप्तमहत्पदस्थःकांताजनप्रीतिकरोगुणज्ञः। भवेन्नरोदेवगुरौहरिस्थे
निरीक्षितेचासुरपूजितेन। ५। सुखेनहीनंमलिनंसुवाचंकृशांगयष्टिंविगतोत्सवंच। करोतिमर्त्यंमरुताममात्यःसिंहस्थ
तःसूर्यसुतेनदृष्टः। ६। इतिसिंहयातेगुरौग्रहदृष्टिः। अथस्वगृहंप्रयातेगुरौग्रहदृष्टिः। राज्ञाविरुद्धत्वमतीवनूनंसुहृज्जने
नापिचवैमनस्यम्। शत्रूद्गमःस्यान्नियतंनराणांजीवेर्कदृष्टेस्वगृहंप्रयाते। १। सुगर्वितंभाग्यधनाभिवृद्ध्याप्रियाप्रिय
स्वामिमतंविशेषात्। करोतिजातंसुखिनंविनीतंचंद्रेक्षितोदेवगुरुःस्वभस्थः। २। व्रणांकितंसंगरकर्मदक्षंहिंसाप
रंक्रूरतरस्वभावम्। परोपकाराभिरतंप्रकुर्याद्गुरुःस्वभस्थः क्षितिजेनदृष्टः। ३। नृपाश्रयप्राप्तमहाधिकारोदाराधनैश्व
र्यसुखोपपन्नः। परोपकारादरतैकचित्तोनरोगुरौस्वर्क्षगतेज्ञदृष्टे। ४। सुखोपपन्नंनिधनंप्रसन्नंप्राज्ञंसदैश्वर्यविराजमा

नम्। नूनंप्रकुर्यान्मनुजंसुरेज्योदैत्येज्यदृष्टोनिजमंदिरस्थः । पदच्युतंसौम्यसुतौविहीनंसंग्रामसंजातपराभवंच। क
रोतिदीनंस्वगृहेसुरेज्यःसूर्यात्मजेनप्रविलोक्यमानः। ६। इतिस्वगृहंगुरौग्रहदृष्टिः। अथमंदस्थानंप्रयातेगुरौग्रहदृष्ट
यः। प्रसन्नकांतिंशुभवाग्विलासंपरोपकारादरतासमेतम्। कुलेनृपालंकुरुतेसुरेज्योमंदालयस्थोयदिभानुदृष्टः। १। कु
लोद्वहस्तीव्रमतिःसुशीलोधर्मक्रियायांसुतरामुदारः। नरोभिमानीपितृमातृभक्तोजीवेशनिक्षेत्रगतेदुदृष्टे। २। स्याद
र्थसिद्धिर्नृपतेःप्रसादात्कीर्तेःसुखानामुपलब्धिरेव। सूतौसुरेज्येशनिमंदिरस्थेनिरीक्ष्यमाणेधरणीसुतेन। ३। शांतंनि
तांतंवनितानुकूलंधर्मक्रियार्थौनिरतंनितांतम्। करोतिमर्त्यंमरुतांपुरोधाबुधेनदृष्टःशनिमंदिरस्थः। ४। विद्याविवेकार्थगु
णैःसमेतःपृथ्वीपतिप्राप्तमनोभिलाषः। स्यात्पूरुषःसूर्यसुतर्क्षसंस्थेजीवेप्रसूतौभृगुजेनदृष्टे। ५। कामंसकामंसुगुणाभि
रामंसद्मार्थप्राप्तिंधनधान्ययुक्तम्। स्यातंविनीतंकुरुतेमनुष्यंमंदेक्षितोमंदगृहस्थजीवः। ६। इतिमंदगृहेप्रयातंगुरौ
ग्रहदृष्टिः। अथकुजगेहयातेशुक्रेग्रहदृष्टयः। कृपाविशेषंनृपतेर्नितांतंमतीवजायाजनितव्यलीकम्। कुर्यान्नराणांतराणि
प्रदृष्टःशुक्रोहिवक्रस्यगृहंप्रयातः। १। श्रेष्ठप्रतिष्ठंचलचित्तवृत्तिंकामातुरत्वाद्विकृतिंप्रयातम्। करोतिमर्त्यंकुजगेहयातो
भृगोःसुतःशीतकरेणदृष्टः। २। धनेनमानेनसुखेनहीनंदीनंविशेषान्मलिनंकरोति। नूनंधरित्रीतनयालयस्थःशुक्रो

धरित्रीतनयेनदृष्टः। ३ । अनार्यमर्थात्मजनैर्विहीनंस्वबुद्धिसामर्थ्यपराङ्मुखंच । क्रूरंपरार्थावहरंनरंहिकरोतिशुक्रःकु
जभेज्ञदृष्टः। ४ । कलत्रपुत्रादिसुखैःसमेतंसत्कायकांतिंसुतरांविनीतम्। उदारचित्तंप्रकरोतिमर्त्यंजीवेक्षितोदैत्यगुरुः
कुजर्क्षे। ५। सुगुप्तवित्ताभिमतंप्रशांतंमान्यंवदान्यंस्वजनानुयातं। करोतिजातंक्षितिपुत्रगेहेसंस्थःसितोभानुसुतेनदृ
ष्टः। ६। इतिकुजगेहयातेशुक्रेग्रहदृष्टयः। अथनिजवेश्मयातेशुक्रेग्रह० । वरांगनाभ्योधनवाहनेभ्यःसुखानिनूनंलभ
तेमनुष्यः। प्रसूतिकालेनिजवेश्मयातेसितेपतंगेननिरीक्ष्यमाणे। १। विलासिनीकेलिविलाससक्तःकुलाधिपालोऽमलबु
द्धिशाली। नरःसुशीलःशुभवाग्विलासःस्वीयालयस्थास्फुजितींदुदृष्टे। २। गृहादिसौख्योपहतंनितांतंकालिप्रसंगाभि
भवोपलब्धिम्। कुर्यान्नराणांदनुजेंद्रमंत्रीस्वक्षेत्रसंस्थःक्षितिपुत्रदृष्टः। ३। गुणाभिरामंसुभगंप्रकामंसौम्यंसुसत्वंधृतिसं
युतंच। स्वक्षेत्रगोदैत्यगुरुःप्रकुर्यान्नरंतुषारांशुसुतेनदृष्टः। ४। सद्वाहनानांग्रहिणीगुणानांसुमित्रपुत्रद्रविणादिकानां।
करोतिलब्धिंनिजवेश्मयातःसितःसुराचार्यनिरीक्षितश्चेत्। ५। गदाभिभूतोहतसाधुवृत्तःसौख्यार्थहीनोमनुजोतिहीनः।
भवेत्प्रसूतौनिजवेश्मयातेभृगोःसुतेभानुसुतेनदृष्टे। ६। इतिनिजवेश्मगेशुक्रेग्रहदृष्टयः। अथबुधर्क्षसंस्थेशुक्रेग्रहदृष्टिः।
नृपावरोधाधिकृतांविनीतंगुणान्वितंशास्त्रकृतप्रवेशम्। कुर्यान्नरंदैत्यगुरुःप्रसूतौसौम्यर्क्षसंस्थोरविणाप्रदृष्टः। १। सद

न्नवस्त्रादिसुखोपपन्नंनीलोत्पलश्यामलचारुनेत्रम् । सुकेशपाशंमनुजंप्रकुर्यात्सौम्यर्क्षसंस्थोभृगुरिंदुदृष्टः ।२। भाग्यान्वितःकामविधिप्रवीणःकांतानिमित्तंद्रविणव्ययःस्यात् । नरोहिनीहारकरात्मजर्क्षेस्थितेसितेभौमसुतेनदृष्टे ।३। प्रज्ञांमहद्वाहनवित्तवृद्धिंसेनापतित्वंपरिवारसौख्यम् । कुर्यान्नराणामुशनाप्रकामंबुधर्क्षसंस्थश्चबुधेनदृष्टः ।४। सद्बुद्धिवृद्धिंबहुवैभवाढ्यःप्रसन्नचेताः सुतरांविनीतः । मर्त्योभवेत्सौम्यगृहोपयातेदृष्टेसितेदेवपुरोहितेन ।५। पराभिभूतंचपलंविविक्तंसुदुःखितंसर्वजनोज्झितंच । मर्त्यंकरोत्येवभृगोस्तनूजःसोमात्मजर्क्षेरविजेनदृष्टः ।६। इतिबुधर्क्षसंस्थेशुक्रेग्रहदृष्टयः । अथकर्कटगेशुक्रेग्रहदृष्टिः । सरोषयोषाकृतहर्षनाशःस्यात्पूरुषःशत्रुजनाभिभूतः । दैत्यार्चितेकर्कटराशियातेनिरीक्षितेऽहर्पतिनाप्रसूतौ ।१। कन्याप्रजापूर्वकपुत्रलाभमंवांसपत्नींबहुगौरवाणि । कुर्यान्नराणांहरिणांकदृष्टःकुलीरगोभार्गवनामधेयः ।२। कलासुदक्षोहतशत्रुपक्षोबुद्ध्याचसौख्येनयुतोमनुष्यः । परंतुकांताकृतचिंतयार्तोभौमेक्षितेकर्कटगेसितेस्यात् ।३। विद्याप्रवीणंगुणिनंगुणज्ञंकलत्रपुत्रोद्भवदुःखतप्तम् । जनोज्झितंचापिकरोतिमर्त्यंकाव्यःकुलीरोपगतोज्ञदृष्टः ।४। अतिचतुरमुदारंचारुवृत्तिंविनीतंमतिविभवसमेतंकामिनीसूनुसौख्यम् । प्रियवचनविलासंमानुषंसंविधत्तेसुरपतिगुरुदृष्टोभार्गवःकर्कसंस्थः ।५। सद्वृत्तसौख्यापहतंगतार्थंव्यर्थप्रयत्नंवनिताजितंच । स्थानच्युतंसं

जनयेन्मनुष्यंमंदेक्षितःकर्कगतःसितारव्यः। ६। इतिकर्कराशिस्थेशुक्रेग्रहदृष्टयः। अथसिंहेसितेखगदृष्टयः। स्प
र्धातिसंवर्द्धितचित्तवृत्तिःकांताश्रयोत्पन्नधनोमनुष्यः क्रमेलकाद्यैर्यदिवायुतःस्यादर्केक्षितेसिंहगतेसितारव्ये। १। नृ
नंजनन्याश्चभवेत्सपत्नीपत्नीविरोधोविभवोद्भवश्च। यस्यप्रसूतौदनुजेंद्रमंत्रीचंद्रेक्षितःसिंहगतोयदिस्यात्। २। नृ
पप्रियंधान्यधनैरुपेतंकंदर्पजातव्यसनाभिभूतम्। करोतिमर्त्यंमृगराजसंस्थोभृगोस्तनूजोऽवनिजेनदृष्टः। ३। धना
न्वितंसंग्रहचित्तवृत्तिलुब्धंस्मराधिक्यविकारनिंद्यम्। दैत्येंद्रमंत्रीकुरुतेमनुष्यंसिंहस्थितःसोमसुतेनदृष्टः। ४। नरेंद्र
मंत्रीधनवाहनाढ्योबह्वंगनानंदनभृत्यसौख्यः। विख्यातकर्माचभृगोस्तनूजेजीवेक्षितेसिंहगतेनरःस्यात्। ५। नृपो
पमंसर्वसमृद्धिभाजंदंडाधिकारेप्यथवानियुक्तम्। करोतिमर्त्यंमृगराजवर्तीदैत्यार्चितःसूर्यसुतेनदृष्टः। ६। इतिसिंहे
सितेखगदृष्टयः। अथजीवभवनेशुक्रेग्रहदृष्टिः। रौद्रंप्राज्ञंभाग्यसौभाग्यभाजंसत्त्वोपेतंवित्तवंतंविशेषात्। नानादेश
प्राप्तयानंमनुष्यंकुर्याच्छुक्रोजीवभेभानुदृष्टः। १। सद्राजमानेनविराजमानंख्यातंविनीतंबहुभोगयुक्तम्। धीरंससारं
हिनरंकरोतिभृगुर्गुरुक्षेत्रगतोब्जदृष्टः। २। द्विषामसह्यंधनिनंप्रसन्नंकांताकृतप्रेमभरंसुपुण्यम्। सद्वाहनाढ्यंकुरुते
मनुष्यंभौमक्षितेज्यालयगामिशुक्रः। ३। सद्वाहनार्थांबरभूषणानांलाभंसदन्नानिसुखानिनूनम्। कुर्यान्नराणांगुरु

मंदिरस्थोदैत्यार्चितःसोमसुतेनदृष्टः ।४। तुरंगहेमांबरभूषणानांमहागजानांवनितासुखानाम् । करोत्यवाप्तिंभृगुजः
प्रसूतौजीवेक्षितोजीवगृहाश्रितश्च ।५। सद्भोगसौख्योत्तमकर्मभाजंनित्योत्सवोत्कर्षयुतंसुवित्तम् । करोतिमर्त्यंगुरु
गेहयातोदैत्यार्चितोभानुसुतेक्षितश्च ।६। इतिजीवगेहेशुक्रेग्रहदृष्टयः । अथशनिक्षेत्रगतशुक्रेखेटदृष्टयः । स्थिर
स्वभावंविभवोपपन्नंमहाधनंसारविराजमानम् । कांताविलासैःसहितंप्रकुर्याद्भृगुःशनिक्षेत्रगतोऽर्कदृष्टः ।१। ओज
स्विनंचारुशरीरयष्टिंप्रकृष्टसत्वंधनवाहनाढ्यम् । करोतिमर्त्यंशनिगेहयातोभृगोःसुतःशीतकरेणदृष्टः । २। श्रमामया
भ्यामतितप्तमूर्तिंमनर्थतोर्थक्षतिसंयुतंच । कुर्यान्नरंदानवराजपूज्यःकुजेक्षितःसूर्यसुतालयस्थः ।३ । विद्याविधिज्ञंध
निनंसुतुष्टंप्राज्ञंसुसत्वंबहुलप्रपंचम् । सद्वाग्विलासंमनुजंप्रकुर्याद्भृगुःशनिक्षेत्रगतोज्ञदृष्टः ।४। सद्गंधमाल्यांबरचारुवा
द्यसंजातसंगीतरुचिःशुचिश्च । स्यान्मानवोदानवराजपूज्येसुरेज्यदृष्टेशनिमंदिरस्थे ।५। प्रसन्नगात्रंचविचित्रलाभं
धनांगनावाहनसूनुसौख्यम् । कुर्यान्नरंदानववृंददेवोमंदेक्षितोमंदगृहाधिसंस्थः । ६। इतिशुक्रेग्रहदृष्टयः। अथभौ
मालयस्थेशनौग्रहदृष्टयः । लुलायगोजाविसमृद्धिभाजं कृषिक्रियायांनिरतंसदैव । सत्कर्मसक्तंजनयेन्मनुष्यंभौमाल
यस्थःशनिरर्कदृष्टः ।१। नीचानुयातंचपलंकुशीलंखलंसुखार्थैःपरिवर्जितंच । कुर्याद्वश्यं ।व जोमनुष्यंशशीक्षितोभू

सुतवेश्मसंस्थः । २ । अनल्पजलपंगतसत्परार्थैकार्यक्षतिंजातविशेषवित्तम् । करोतिजातंननुभानुसूनुःकुजेनदृष्टःकु
जवेश्मसंस्थः । ३ । चौर्यकर्मकलहादितत्परंकामिनीजनगतोत्सवंनरम् । ईक्षितोहिकुरुतेऽर्कनंदनोभूमिसूनुभवना
धिसंस्थितः ।४। सुखधनैःसहितंनृपमंत्रिणंनृपसमाश्रितमुख्यतयान्वितम् । सुरपुरोहितवीक्षितभानुजोऽवनिजवेश्मग
तःकुरुतेनरम् । ५ । बहुप्रयाणाभिरतंविकांतिंपापांगनासक्तमतिंविचित्तम् । करोतिमर्त्यंक्षितिजालयस्थोभानोस्तनूजो
भृगुजेनदृष्टः ।६ । इतिशनौभौमालयस्थेग्रहदृष्टयः । अथशुक्रवेश्मगेशनौग्रहदृष्टयः । विद्याविचारेप्रचुरोऽतिवक्ता
परान्नभोक्ताविधनश्चशांतःभवेन्नरस्तिग्मकरेणदृष्टेसूर्यात्मजेभार्गववेश्मसंस्थे।१।नृपप्रसादाप्तमहाधिकारंयोषाविभू
षांबरजातसौख्यम् । बलान्वितंसंजनयेन्मनुष्यंमंदःसितर्क्षेहरिणांकदृष्टः । २ संग्रामकार्याभिरतंनितांतमनल्पजलपं
चमहत्प्रसादम् । कुर्यान्नरंतिग्मकरस्यसूनुर्भूसूनुदृष्टोभृगुजालयस्थः । ३ । कांतारतोनीचजनानुयातोविनोदहास्या
भिरतोगतार्थः । क्लीबादिसख्यश्चभवेन्मनुष्यःशनौसितर्क्षेशशिसूनुदृष्टे । ४ । परोपकारेकृतचित्तवृत्तिःपरस्यदुःखेनसु
दुःखितश्च । दातोद्यमीसर्वजनप्रियश्चमंदेसितर्क्षेगुरुणाप्रदृष्टे ।५। रत्नादिलाभंवनिताविलासंजलाधिकत्वंनृपगौरवा
प्तिम् । कुर्यान्नराणांतरणेस्तनूजःशुक्रेक्षितःशुक्रगृहंप्रयातः ।६। इतिशनौशुक्रोदवसितप्रयातेग्रहाणांदृष्टयः । अथ

बुधमंदिरेशनौखेटदृशः। सुखोज्झितंनीचरतंसकोपमधार्मिकंद्रोहकरंसुधीरम्। कुर्यान्नरंतिग्मकरस्यसूनुर्भानुप्रदृष्टोबुध
मंदिरस्थः। १। प्रसन्नमूर्त्तिर्नृपतिप्रसादप्राप्ताधिकारोन्नातिकार्यवृत्तिः। कांताधिकारोयदिवानरःस्यान्मंदेज्ञभस्थेमृत
राशिमदृष्टे। २। प्रकृष्टबुद्धिंसुतरांविधिज्ञंख्यातंगभीरंचनरंकरोति। सोमात्मजक्षेत्रगतोर्कसूनुर्भूसूनुदृष्टःपरिसूतिका
ले। ३। धनान्वितंचारुमतिंविनीतंगीतप्रियंसंगरकर्मदक्षम्। शिल्पेप्यभिज्ञंमनुजंप्रकुर्यात्सौम्येक्षितःसौम्यगृहस्थमंदः
। ४। राजाश्रितश्चारुगुणःसमेतःप्रियःसतांगुप्तधनोमनस्वी। भवेन्नरोमंदचरोयदिस्याज्ज्ञराशिसंस्थःसुरपूज्यदृष्टः। ५।
योषाविभूषाकरणप्रवीणंसत्कर्मधर्मानुरतंनितांतम्। स्त्रीसक्तचित्तंप्रकरोतिमर्त्यंसितेक्षितोभानुसुतोज्ञगेहे। ६। इतिबु
धगेहेशनौग्रहदृष्टयः। अथकुलीरोपगतमंदप्रतिग्रहदृष्टिः। आनंददारद्रविणैर्विहीनःसदान्नभोगैरपिवोज्झितश्च। मातु
र्महाक्लेशकरोनरःस्यान्मंदेकुलीरोपगतेऽर्कदृष्टे। १। निपीडनंबंधुजनेजनन्यांनूनंधनानामभिवर्द्धनंच। कुर्यान्नराणांद्युम
णेस्तनूजःकुलीरसंस्थोद्विजराजदृष्टः। ग़लद्बलक्षीणकलेवरश्चनृपार्पिताथोत्तमवैभवोऽपि। स्यान्मानुषोभानुसुते
प्रसक्तेकर्कस्थितेक्षोणिसुतेनदृष्टे। ३। वाग्विलासकठिनोऽटनबुद्धिश्चेष्टितैर्बहुविधैरपियुक्तः। दंभवृत्तिचतुरोऽपि
नरःस्यात्कर्कगामिनिशनौबुधदृष्टे। ४। क्षेत्रपुत्रगृहगेहिनीधनैरत्नवाहनविभूषणैरपि। संयुतोभवतिमानवोजनो

जीवदृष्टियुजिकर्कगेशनौ ।५। उदारतागौरवचारुमानैःसौंदर्यवर्यामलवाग्विलासैः । नूनंविहीनामनुजाभवेयुःशुक्रे
क्षितेकर्कगतेऽर्कसूनौ। ६ । इतिकर्कोपगतेशनौग्रहदृष्टयः । अथसिंहोपयातेमंदेग्रहदृष्टिः । धनेनधान्येनचवाहने
नसद्वृत्तसत्योत्तमचेष्टितैश्च । भवेद्विहीनोमनुजःप्रसूतौसिंहस्थितेभानुसुतेऽर्कदृष्टे । १ । सद्रत्नभूषांबरचारुकीर्तिक
लत्रमित्रात्मजसौख्यपूर्तिम् । प्रसन्नमूर्तिंकुरुतेऽर्कसूनुर्नरंहरिस्थोहरिणांकदृष्टः । २ । संग्रामकर्मण्यतिनैपुणःस्या
त्कारुण्यहीनोमनुजः सकोपः । क्रूरस्वभावोननुभानुसूनौपंचाननस्थेऽवनिसूनुदृष्टे । ३ । धनांगनासूनुसुखेनहीनंदी
नंचनीचव्यसनाभिभूतम् । करोतिजातंतपनस्यसूनुःसिंहस्थितःसोमसुतेक्षितश्च । ४ । सन्मित्रपुत्रादिगुणैरुपेतंख्या
तंसुवृत्तंसुतरांविनीतम् । नरंपुरग्रामपतिंकरोतिसौरिर्हरिस्थोगुरुणाप्रदृष्टः । ५ । धनैश्चधान्यैरपिवाहनैश्चसुखैरुपेतं
वनिताप्रतप्तम् । कुर्यान्मनुष्यंतपनस्यसूनुःपंचाननस्थोभृगुसूनुदृष्टः । ६ । इतिसिंहोपयातेशनौग्रहदृष्टयः । अथगु
र्वंगारेशनैश्चरेग्रहाणांदृष्टिः । ख्यातिंधनाप्तिंबहुगौरवाणिस्नेहप्रवृत्तिंपरनंदनेषु । लभेन्नरोदेवगुरोरगारेशनैश्चरेपद्मि
निनाथदृष्टे । १ । सद्वृत्तशालीजननीवियुक्तोनामद्वयालंकरणप्रयातः । सुखार्थभार्यासुखभाङ्नरःस्यात्सौरेसुरेज्यालयगेऽब्जदृ
ष्टे । २ । वातान्वितंलोकविरुद्धचेष्टंप्रवासिनंदीनतरंकरोति । नरंधरासूनुनिरीक्ष्यमाणोमार्तंडपुत्रःसुरमंत्रिणोभे । ३ ।

गुणाभिरामोधनवान्प्रकामंनराधिराजाप्तमहाधिकारः। नरःसदाचारविराजमानःशनौज्ञदृष्टेगुरुमंदिरस्थे। ४। नृपप्र
धानःपृतनापतिर्वासर्वाधिशालीबलवान्सुशीलः।स्यान्मानवोभानुसुतेप्रसूतौजीवेक्षितेजीवगृहंप्रयाते।५। विदेशवासी
बहुकार्यसक्तोद्विमातृपुत्रःसुतरांपवित्रः। स्यान्मानवोदानवमंत्रिदृष्टेमंदेऽमराचार्यगृहंप्रयाते। ६। इतिगुर्वगारेशनै
श्चरेग्रहाणांदृष्टयः।अथनिजागारगतमंदंप्रतिगृहदृष्टयः। कुरूपभार्यश्चपरान्नभोक्तानानाप्रयासामयसंयुतश्च।विदेश
वासीप्रभवेमनुष्योमंदेनिजागारगतेर्कदृष्टे। १। धनांगनाढ्यंवृजिनानुयातंचलत्स्वभावंजननीविरुद्धम्। कामातुरं
चापिनरंप्रकुर्यान्मंदःस्वभस्थोऽमृतरश्मिदृष्टः। २। शूरःक्रूरःसाहसीसद्गुणाढ्यःसर्वोत्कृष्टःसर्वदाहृष्टचित्तः। स्यातोमर्त्य
श्चात्मजस्थेऽर्कपुत्रेधात्रीपुत्रप्रेक्षणत्वंप्रयाते। ३। सद्वाहनान्साहसिकान्ससत्वान्धीरांश्चनानाविधकार्यसक्तान्।करो
तिसर्वान्ननुभानुपुत्रःस्वक्षेत्रसंस्थःशशिपुत्रदृष्टः। ४। गुणान्वितंक्षोणिपतिप्रधानंनिरामयंचारुशरीरयष्टिम्। कुर्यान्न
रंदेवगुरुप्रदृष्टश्चंडांशुसूनुर्निजवेश्मसंस्थः। ५। कामातुरंसन्नियमेनहीनंभाग्योपपन्नंसुखिनंधनाढ्यम्।भोक्तारमीशं
कुरुते स्वभस्थोरवेःसुतोभार्गवसूनुदृष्टः। ६। इतिनिजागारगतमंदंप्रतिगृहदृष्टयः। इतिश्रीढुंढिराजविरचिते
जातकाभरणेगृहदृष्टिफलाध्यायः। अथराशिफलानि। भवतिसाहसकर्मकरोनरोरुधिरपित्तविकारकलेवरः। क्षिति

पतिर्मतिमान्सहितस्तदासुमहसामहसामधिपोक्रिये ।१। परिमलैर्विमलैःकुसुमाशनैःसुवसनैःपशुभिःसुखमद्भुतम् । गवि
गतोहिरविर्जलभीरुतांविहितमाहितमादिशतेनृणां।२।गणितशास्त्रकलामलशीलतासुललिताद्भुतवाक्प्रथितोभवेत्
दिनपतौमिथुनेननुमानवोविनयतानयतातिशयान्वितः ।३ । सुजनतारहितःकिलकालविज्जनकवाक्यविलोपकरोनरः ।
दिनकरेहिकुलीरगतेभवेत्सधनताधनतासहिताधिकः ।४।स्थिरमतिश्चपराक्रमताधिकोविभुतयाद्भुतकीर्तिसमन्वितः ।
दिनकरेकरिवैरिगतेनरोनृपरतोपरतोषकरोभवेत् ।५।दिनपतौयुवतौसमवस्थितेनरपतेर्द्रविणंहिनरोभजेत् । मृदुवचाः
श्रुतगेयपरायणःसुमहिमामहिमापहिताहितः ।६ । नरपतेरतिभीरुरहर्निशंजनविरोधविधानमघंदिशेत् । कलिमनाःप
रकर्मरतिर्घटेदिनमणिर्नमणिद्रविणादिकम् । ७। कृपणताकलहंचभृशंरुषंविषहुताशनशस्त्रभयंदिशेत्।अलिगतःपितृ
मातृविरोधितांदिनकरोनकरोतिसमुन्नतिम् ।८। स्वजनकोपमतीवमहान्वितंबहुधनंहिधनुर्धरगोरविःसुजनपूजनमा
दिशतेनृणांसुमतितोमतितोषविवर्द्धनम् । ९।अटनतांनिजपक्षविपक्षतामधनतांकुरुतेसततंनृणाम् ।मकरराशिगतोवि
गतोत्सवंदिनविभुर्नविभुत्वसुखंदिशेत् ।१०। कलशगामिनिपंकजिनीपतौशठतरोहिनरोगतसौहृदः मलिनताकलितो
रहितःसदाकरुणयारुणयात्तसुखोभवेत् । ११ । बहुधनंक्रयविक्रयतःसुखंनिजजनादपिगृह्यमहाभयं । दिनपतौगुरुभेऽ

भिमतोभवेत्सजनतोजनतोषदसन्मतिः। १२। इतिराशिस्थितरविफ०। अथराशिस्थचंद्रफ०। स्थिरधनोरहितःसुजनै
र्नरःसुतयुतःप्रमदाविजितोभवेत् ।अजगतोद्विजराजइतीरितंविभुतयाद्भुतयास्वसुकीर्तिभाक्। १।स्थिरगतिंसुमतिंक
मनीयतांकुशलनांहिनृणामुपभोगतां।वृषगतोहिमगुर्भृशमादिशेत्सुकृतितःकृतितश्चसुखानिच।२। प्रियकरःकरमत्स्ययु
तोनरःसुरतसौख्यभरोयुवतिप्रियः।मिथुनराशिगतोहिमगौभवेत्सुजनताजनताकृतगौरवः।३।श्रुतकलाबलनिर्मलवृत्त
यःकुसुमगंधजलाशयकेलयः। किलनरास्तुकुलीरगतेविधौवसुमतीसुमतीप्सितलब्धयः।४। अचलकाननयानमनोरथं
गृहकलिंचगलोदरपीडनम्।द्विजपतिर्मृगराजगतोनृणांवितनुतेतनुतेजविहीनताम्।५। युवतिगेशशिनिप्रमदाजनप्रब
लकेलिविलासकुतूहलैः।विमलशीलसुताजननोत्सवैःसुविधिनाविधिनासहितःपुमान्।६।वृषतुरंगमविक्रमविक्रमाद्विजसु
रार्चनदानमनाःपुमान्।शशिनितौलिगतेबहुदारभाग्विभवसंभवसंचितविक्रमः।७। शशधरेहिसरीसृपगेनरोनृपदुरोदर
जातधनक्षयः। कलिरुचिर्विबलःखलमानसःकुशमनाःशमनापहतोभवेत्।८। बहुकलाकुशलःप्रबलोमहाविमलताकलि
तःसरलोक्तिभाक्। शशधरेतुधनुर्धरगेनरोधनकरोनकरोतिबहुव्ययम्।९। कलितशीतभयःकिलगीतवित्तनुरुषासहि
तोमदनातुरः। निजकलोत्तमवृत्तिकरःपरंहिमकरेमकरेपुरुषोभवेत्।१०। अलसतासहितोऽन्यसुतप्रियःकुशलताकलि

तोतिविचक्षणः। कलशगामिनिशीतकरेनरःप्रशमितोशमितोऽरिपुव्रजः। ११। शशिनिमीनगतेविजितेंद्रियोबहुगुणः कुशलोजललालसः। विमलधीःकिलशास्त्रकलादरस्त्वबलताबलताकलितोनरः। १२। इतिचंद्रफलम्। अथराशिगत भौमफलम्। क्षितिपतेःक्षितिमानधनागमैःसुवचसामहसाबहुसाहसैः। अवनिजःकुरुतेसततंयुतंत्वजगतोजगतोऽभिम तंनरम्। १। गृहधनाल्पसुखंचरिपूदयंपरगृहास्थितिमादिशतेनृणाम्। अवनयाग्निरुजोवृषभास्थितःक्षितिसुतोऽतिसुताद्भ वपीडनम्। २। बहुकलाकलनंकुलजोत्कलिंप्रचलनांप्रियतांचनिजस्थलात्। ननुनृणांकुरुतेमिथुनस्थितःकुतनयस्तन यप्रमुखासुखम्। ३। परगृहस्थिरतामतिदीनतांविमतितांशमितांचरिपूदयम्। हिमकरालयगेकिलमंगलेप्रबलयाब लयाकलहंव्रजेत्। ४। अतितरांसुतदारसुखान्वितोहतरिपुर्विततोद्यमसाहसः। अवनिजेमृगराजगतेपुमाननयतान यताभियुतोभवेत्। ५। सुजनपूजनताजनताधिकोयजनयाजनकर्मरतोभवेत्। क्षितिसुतेसतिकन्यकयान्वितेत्ववनितो वनितःसवतःसुखी। ६। बहुधनव्ययतांगविहीनतागतगुरुप्रियतापरितापितः। वणिजिभूमिसुतेविकलःपुमानवनितो वनितोद्भवदुःखितः। ७। विषहुताशनशस्त्रभयान्वितःसुतसुतावनितादिमहत्सुखः। वसुमतीसुतभाजिसरीसृपेनृपरतः परतश्चजयंव्रजेत्। ८। रथतुरंगमगौरवसंयुतःपरमरातिजनक्षतिदुःखितः। भवतिनावनिजेधनुषिस्थितेसुवनितावनि

ताभ्रमणिप्रियः ।९। रणपराक्रमतावनितासुखंनिजजनप्रतिकूलतयाश्रमः । विभवतामनुजस्यधरात्मजेमकरगेकरगे
वरमाभवेत् । १० । विनयतारहितंसहितंरुजानिजजनप्रतिकूलमलंखलम् । प्रकुरुतेमनुजंकलशाश्रितःक्षितिसुतोऽति
सुतोद्भवदुःखितं । ११ । व्यसनतांखलतामदयालुतांविकलतांचलनंचनिजालयात् । क्षितिसुतस्तिमिनासुसमन्वितो
विमतिनामतिनाशनमादिशेत् । १२ । इतिभौमः । अथबुधः । खलमतिःकिलचंचलमानसोबहुलभुक्कलहाकुलितोनरः ।
अकरुणोऽनृणवांश्चबुधेभवेदाविगतेविगतेक्षितसाधनः । १ । वितरणप्रणयंगुणिनंदिशेद्बहुकलाकुशलंरतिलालसम् । ध
निनामिंदुसुतोवृषभस्थितस्तनुजतोनुजतोऽतिसुखंनरम् । २ । प्रियवचोरचनासुविचक्षणोद्विजननीतनयःशुभवेषभाक् ।
मिथुनगेजननेशशिनंदनेसदनतोऽदनतोपिसुखीनरः ।३। कुचरितानिचगीतकथादरोनृपरुचिःपरदेशगतिर्नृणाम् । कि
लकुलीरगतेशशभृत्सुतेसुरततारततानितरांभवेत् । ४ । अनृततासहितंविमतिंपरंसहजवैरकरंकुरुतेनरम् । युवतिहर्षप
रंशशिनःसुतोहरिगतोऽरिगतोन्नतिदुःखितम् । ५ । सुवचनानुरतश्चतुरोनरोलिखनकर्मपरोहिवरोन्नतिः । शशिसुते
युवतौचगतेसुखीसुनयनानयनांचलचेष्टितैः ।६ । अनृतवाग्व्ययभाक्खलुशिल्पवित्कुचरिताभिरतिर्बहुजल्पकः । व्य
सनयुङ्मनुजःसहितेबुधेऽत्रतुलयातुलयात्वसतायुतः । ७ । कृपणतातिरतिप्रणयश्रमोविहितकर्मसुखोपहतिर्भवेत्

धवलभानुसुतेऽलिगतेक्षतिस्खलसतोलसतोऽपिचवास्तुनः। ८ । वितरणप्रणयोबहुवैभवःकुलपतिश्चकलाकुशलोभवे
त्। शशिसुतेत्रशरासनसंस्थितेविहितयाहितयारमयान्वितः। ९। रिपुभयेनयुतःकुमतिर्नरःस्मरविहीनतरःपरकर्मकृत्
मकरगेसतिशीतकरात्मजेव्यसनतःसनतःपुरुषोभवेत्। १०। गृहकलिकलशोशशिनंदनोवितनुतेतनुतांननुदीनताम्। ध
नपराक्रमधर्मविहीनतांविमतितामतितापितशत्रुभिः। ११। परधनादिकरक्षणतत्परोद्विजसुरानुचरोहिनरोभवेत्। शशि
सुतेपृथुरोमसमाश्रितेसुवदनावदनानुविलोकनः। १२। इतिबुधः। अथगुरुफलम् । बहुतरांकुरुतेसमुदारतांसुरचि
तांनिजवैरिसमुन्नतिम्।विभवतांचमरुत्पतिपूजितःक्रियगतोयगतोरुमतिप्रदः। १। द्विजसुरार्चनभक्तिविभूतयोद्रविणवा
हनगौरवलब्धयः। सुरगुरौवृषभेबहुवैरिणश्चरणगारणगाढपराक्रमैः। २। कवितयासहितःप्रियवाक्शुचिर्विमलशीलरु
चिर्निपुणःपुमान्। मिथुनगेसतिदेवपुरोहितेसहितताहिततासहितैर्भवेत्। ३। बहुधनागमनोमदनोन्नतिर्विविधशास्त्रक
लाकुशलोनरः। प्रियवचाश्चकुलीरगतेगुरौचतुरगैस्तुरगैःकरिभिर्युतः। ४। अचलदुर्गवनप्रभुतोऽर्जितोदृढतनुर्ननुदान
परोभवेत्। अरिविभूतिहरोहिनरोयुतःसुवचसावचसामधिपेगुरौ। ५ । कुसुमगंधसदंबरशालिताविमलताधनदान
मतिभ्रंशम्। सुरगुरौसुतयासतिसंयुतेरुचिरताचिरतापितशत्रुता। ६। श्रुततपोजपहोममहोत्सवेद्विजसुरार्चनदान

मतिर्भवेत् । वणिजिजन्मनिचित्रशिखंडिजेचतुरतातुरतासहितारिता । ७ । धनविनाशनदोषसमुद्भवैःकृशतरोबहुदं
भपरोनरः । अलिगतेसतिदेवपुरोहितेभवनतोवनतोऽपिचदुःखभाक् । ८ । वितरणप्रणयोबहुवैभवंननुधनान्यथवाह
नसंचयः । धनुषिदेवगुरौहिमतिर्भवेत्सुरुचिरारुचिराभरणानिच । ९ । हतमतिःपरकर्मकरोनरोस्मरविहीनतरोमय
रोषभाक् । सुरगुरौमकरेविदधातिनोजनमनोनमनोरथसाधनम् । १० । गदयुतःकुमतिर्द्रविणोज्झितःकृपणतानिर
तःकृतकिल्बिषः । घटगतेसतिदेवपुरोहितेकदशनोदशनोदरपीडितः । ११ । नृपकृपाप्तधनोमदनोन्नतिःसदनसाधन
दानपरोनरः । सुरगुरौतिमिनासहितेसतामनुमतोनुमतोत्सवदोभवेत् । १२ । इतिगुरुः । अथशुक्रः । भवनवाह
नवृंदपुरोधिपःप्रचलनप्रियताविहितादरः । यदिचसंजननेहिभवेद्रविःकवियुतोवियुतोरिपुभिर्नरः । १ । बहुकलत्रयु
तोत्सवगौरवंकुसुमगंधरुचिःकृषिनिर्मितिः । वृषगतेभृगुजेकमलाभवेदविरलाविरलारिपुमंडली । २ । भृगुसुतेजननेमि
थुनस्थितेसकलशास्त्रकलामलकौशलम् । सरलताललिताकिलभारतीसुमधुरामधुरान्नरुचिर्भवेत् । ३ । द्विजपतेःसद
नेभृगुनंदनेविमलकर्ममतिर्गुणसंयुतः । जनमलंसकलंकुरुतेवशंसुकलयाकलयापिगिरानरः । ४ । हरिगतेसुरवैरिपुरो
हितेयुवतितोधनमानसुखानिच । निजजनव्यसनान्यपिमानवस्त्वहिततोहिततोषमनुव्रजेत् । ५ । भृगुसुतेसतिक

न्यकयान्वितेबहुधनीखलुतीर्थमनोरथः। कमलयापुरुषोतिविभूषितस्त्वमितयामितयापिगिरान्वितः। ६। कुसुम
वस्त्रविचित्रधनान्वितोबहुगमागमनोननुमानवः। जननकालतुलाकलनंयदासुकविनाकविनायकतांव्रजेत्। ७। क
लहघातमतिंजनानिंद्यतांप्रजननामयतांनियतंनृणाम्। व्यसनतांजननेऽलिसमाश्रितःकविरलंविरलंकुरुतेधनम्। ८।
युवतिसूनुधनागमनोत्सवंसचिवतांनियतंशुभशीलताम्। जनुषिकार्मुकगःकुरुतेकविःकविरतिंविरतिंचिरतोनृणाम्। ९।
अभिरतिस्तुजरांगनयानृणांव्ययभयंकृशतामतिचिंतया। भृगुसुतेमृगराजगतेसदाकविजनेविजनेपिमनोभवेत्। १०।
उशनसःकलशेजनुषिस्थितौवसनभूषणभोगविहीनता। विमलकर्ममहालसतानृणामुपगतापगताविरमाभवेत्। ११।
भृगुसुतेसतिमीनसमन्वितेनरपतेर्विभुताविनताभवेत्। रिपुसमाक्रमणंद्रविणागमोवितरणेतरणेऽणयोनृणाम्। १२।
इतिशुक्रः। अथशनिः। धनविहीनतयातनुतातनौजनविरोधतयेप्सितनाशनम्। क्रियगतेर्कसुतेस्वजनैर्नृणांविषमता
शमताशमनंभवेत्। १। युवतिसौख्यविनाशनतांभृशंपिशुनसंगरुचिंमतिविच्युतिम्। तनुभृतांजननेवृषभस्थितोर
विसुतोविसुतोत्सवमादिशेत्। २। प्रचलनंविमलत्वविहीनतांभवनबाह्यविलासकुतूहलम्। त्रजातिनामिथुनोपगतेसु
तेदिनविभोर्नविभोर्लभतेसुखम्। ३। शशिनिकेतनगामिनिभानुजेतनुभृतांकृशताभृशमंबया। वरविलासकराकम

लाभवेद्विकलंविकलंरिपुमंडलम् । ४ । लिपिकलाकुशलश्चकलिप्रियोविमलशीलविहीनतरोनरः । रविसुतेरविवे
श्मनिसंस्थितेहतनयस्तनयप्रमदार्तिभाक् । ५। विहितकर्मणिशर्मकदापिनोविनयतोपहतिश्चलसौहृदम् । रविसु
तेसतिकन्यकयान्वितेविबलताबलतासहितोभवेत् । ६ । निजकुलेऽवनिपालबलान्वितःस्मरबलाकुलितोबहुदानदः ।
जलजिनीशसुतेहितुलान्वितेनृपकृतोपकृतोहिनरोभवेत् ।७। विषहुताशनशस्त्रभयान्वितोधनविनाशनवैरिगदार्दितः ।
विकलताकलिताचसमन्वितेरविसुतेविसुतेऽष्टसुखोनरः । ८ । रविसुतेनयुतेसतिकार्मुकेसुतगणैःपरिपूर्णमनोरथः । प्र
थितकीर्तिसुवृत्तपरोनरोविभवतोभवतोपयुतोभवेत् । ९ । नरपतेरविगौरवतांव्रजेद्रविसुतेमृगराशिगतेनरः । अगुरुणा
कुसुमैर्मृगजातयाविमलयामलयाचलजैःसुखम् । १० । ननुजितोरिपुभिर्व्यसनानृतोविहितकर्मपराङ्मुखतान्वितः ।
रविसुतेकलशेनसमन्वितेसुसहितःसहितप्रचयैर्नरः । ११ । विनयताव्यवहारसुशीलतासकललोकगृहीतगुणोनरः । उ
पकृतौनिपुणस्तिमिसंश्रितेरविभवेविभवेनसमन्वितः । १२ । बलान्वितेराशिपतौचराशौखेटेथवाराशिफलंसमग्रम् ।
नीचोच्चगेहास्तमयादिभावैर्न्यूनाधिकत्वंपरिकल्पनीयम् । १३ । इतिराशिफलानि । अथशुभाशुभज्ञानार्थंशनिचक्रंलि
ख्यते । नराकारंलिखेच्चक्रंशनिचक्रंतदुच्यते । वेदितव्यंफलंतस्मान्मानवानांशुभाशुभम् । १ । जन्मर्क्षतोयत्रचकुत्रसं

स्थंमित्रस्यपुत्रंप्रथमंविदित्वा। चक्रेनराख्येखलुजन्मधिष्ण्याद्विन्यस्यभानिप्रवदेत्फलानि । २ । नक्षत्रमेकंचशिरोवि
भागेमुखेलिखेत्त्रीणियुगंचगुह्ये। नेत्रेचनक्षत्रयुगंहृदिस्थंभपंचकंवामकरेचतुष्कम् । ३ । वामेचपादेत्रितयंहिभानांभा
नांत्रयंदक्षिणपादसंस्थम्। चत्वारिऋक्षाणिचदक्षिणाख्येपाणौप्रणीतंमुनिनारदेन। ४। रोगोलाभोहानिराप्तिश्चसौ
ख्यंबंधःपीडामत्प्रयाणंचलाभः। मंदेचक्रेमार्गगेकल्पनीयंतद्वल्लोम्याच्छीघ्रगेस्युःफलानि। ५। इतिशनिचक्रम्। अथस

| |अथ सर्वतोभद्रचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ | कृ | रो | मृ | आ | पु | पु | आ | आ |
| भ | ऊ | अ | व | ॠ | ह | ड | उ | म |
| अ | ल | लृ | २ | ३ | ४ | ॡ | म | पू |
| रे | च | १ | ओ | नं | औ | ५ | ट | उ |
| उ | द | १२ | र | पू | भ | ६ | प | ह |
| पू | स | ११ | अं | ज | अः | ७ | र | चि |
| श | ग | ए | १० | ९ | ८ | ऐ | त | स्वा |
| ध | ऋ | ख | ज | भ | य | न | ऋ | वि |
| ह | श्र | अ | उ | पू | पू | ज्ये | अ | इ |

र्वतोभद्रचक्रम् । अथातःसंप्रवक्ष्यामिचक्रंत्रैलोक्यदीपकम्। विख्यातंसर्वतोभद्रंसद्यःप्रत्यय
कारकम्। १। याम्योत्तराःप्रागपराश्चरेखाःकोष्ठानवात्रचक्रेसुधियाविधेयाः । स्वरर्क्षवर्णादिक
मत्रलेख्यंप्रसिद्धभावाच्चमयानिरुक्तम्।२।भ्रमोभवेद्वेधऽक्षरजेचहानिर्व्याधिःस्वरेभीश्चतिथौ
निरुक्ता। राशौचवेधेसातिविघ्नमेवजंतुःकथंजीवतिपंचवेधे। ३। भरण्यकारौवृषभंचनंदांभ
द्रांतकारंश्रवणंविशाखाम् । तुलांचविध्येदनलर्क्षसंस्थोग्रहोऽत्रचक्रेगदितंस्वरज्ञैः। ४। वका
रमौकारमकारदास्त्रेस्वातींरकारांमिथुनंचकन्याम्। तथाभिजिज्ज्ञंझकभंचविध्येद्ब्रह्मर्क्षसंस्थो
हिनमश्चरेंद्रः। ५। ककंककारंचहरिंपकारंचित्रांचपौष्णंचतथालकारम् । अकारकंवैश्वभ

मत्रविध्येद्दलंनभोमंडलगोमृगस्थः।६। एवंवेधःसर्वतोभद्रचक्रेसर्वर्क्षेभ्यइहैच तनीयःसुधीभिः। द्वाद्वेधःसत्फलंसौम्यजातोऽत्यंतंकष्टंदुष्टवेधःकरोति।७। यस्मिन्नृक्षेसंस्थितोवेधकर्त्तापापःखेटःसोऽत्यभंयातियस्मिन्। कालेतस्मिन् मंगलंपीडितानांप्रोक्तंसद्भिर्नान्यथास्यात्कदाचित्। ८। इतिसर्वतोभद्रचक्रम्। अथसूर्यकालानलचक्रम्। सूर्यकालानलंचक्रंस्वरशास्त्रोदितंहियत्। तदहंविशदंवक्ष्ये चमत्कृतिकरंपरम्।१। त्रिशूलकाग्राःसरलाश्चतिस्रःकिलोर्ध्वरेखाःपरिकल्पनीयाः। रेखात्रयंमध्यगतंचतत्रद्वेद्वेचकोणोपरिगेविधेये।२। त्रिशूलकोणांतरकान्यरेखातदग्रयोःशृंगयुगंविधेयम्। मध्येत्रिशूलस्यचदंडमूलात्सव्येनभान्यर्कभतोऽभिजिच्च।३। स्वनामभंयत्रगतंचतत्रप्रकल्पनीयंसदसत्फलंहि। तलस्थऋक्षात्रितयेक्रमेणाचिंतावधश्चप्रतिबंधनानि।४। शृंगद्वयेरुक् चभवेद्विभंगःशूलेषुमूलंपरिकल्पनीयम्। शेषेषुधिष्ण्येषुजयश्चलाभोऽभीष्टार्थसिद्धिर्बहुधानराणाम्।५। श्रीसूर्यकालानलचक्र

इदं सूर्यकालानलचक्रम्



मेतद्गुदेचवादेचरणेप्रयाणे।प्रयत्नपूर्वंननुचिंतनीयंपुरातनानांवचनंप्रमाणम्॥६॥
इतिसूर्यकालानलचक्रम्। अथचंद्रकालानलचक्रम्। कर्काटकेनप्रविधायवृत्तंत
स्मिंश्चपूर्वापरयाम्यसौम्ये।वृत्ताद्बहिःसंचलितेविधेयेरेखेत्रिशूलाश्चतदग्रकेषु।
।१। कोणाश्चरेखाद्वितयेनसाध्याःपूर्वत्रिशूलेकिलमध्यसंस्थम्। चांद्रंलिखेद्धंतद
नुक्रमेणसव्येनधिष्ण्यानिबहिस्तदंते।२।कालानलंचक्रमिदंहिचांद्रंरणप्रयाण
दिषुजन्मभंचेत्। त्रिशूलसंस्थंनिधनायनूनमंतर्बहिस्थंत्वशुभप्रदंहि।३। इतिचं
द्रकालानलचक्रम्।अथाष्टवर्गान्तजन्मराशेःखचरप्रचारैर्यद्गोचरंसांहितिकैःप्रणी
तम्। स्थूलंफलंतत्किलसंप्रवच्मिबालावबोधप्रदमग्रगानाम्। १। गतिर्भयंश्री
र्व्यसनंचदैन्यंशत्रुक्षयोयानमतीवपीडा।कांतिक्षयोऽभीष्टवरिष्ठसिद्धिर्लाभोऽव्य
योर्कस्यफलंक्रमेण।२। सदन्नमर्थक्षयमर्थलाभंकुक्षिव्यथांकार्यविघातलाभम्।
वित्तंरुजंराजभयंसुखंचलाभंचशोकंकुरुतेमृगांकः। ३। पुत्रधर्मधनस्थस्यचं



द्रस्योक्तमसत्फलम् । कलाक्षयेपरिज्ञेयंकलावृद्धौतुसाधुतत् ।४। भीतिंक्षतिंवित्तमरिप्रवृद्धिमर्थप्रणाशंधनमर्थनाशम् ॥
शस्त्रोपघातंचरुजंचरोगंलाभंव्ययंभूतनयस्तनोति।५। बंधंधनंवैरिभयंधनाप्तिंपीडांस्थातिंपीडनमर्थलाभम् खेदंसुखं
लाभमथार्थनाशंक्रमात्फलंयच्छतिसोमसूनुः ।६। भीतिंवित्तंपीडनंवैरिवृद्धिंसौख्यंशोकंराजमानंचरोगम् । सौख्यंदैन्यं
मानवित्तंचपीडांदत्तेजीवोजन्मराशेःसकाशात् । ७ । रिपुक्षयंवित्तमतीवसौख्यंवित्तंसुतप्रीतिमरातिवृद्धिं । शोकंधना
प्तिंवरवस्त्रलाभंपीडांस्वमर्थंचददातिशुक्रः ।८। भ्रंशंकलशंचशत्रुप्रवृद्धिंपुत्रात्सौख्यंसौख्यवृद्धिंचदोषम् पीडांसौख्यं
निर्धनत्वंधनाप्तिंनानानर्थंभानुसुनुस्तनोति । ९ । हानिंनैःस्व्यंस्वंचवैरंचशोकंवित्तंवादंपीडनंचापिपापम् ॥ वैरंसौख्यं
द्रव्यहानिंप्रकुर्याद्राहुःपुंसांगोचरेकेतुरेवम् । १० । राशौराशौगोचरेखेचराणामुक्तंपूर्वैर्यत्फलंजन्मराशेः । तन्मर्त्याना
मेकभोत्पत्तिकानांभिन्नाभिन्नंदृश्यतेवश्यमेव। ११ ।यस्मिन्राशौशीतरश्मिःप्रसूतौसस्थःप्रोक्तोजन्मराशिःसएवाएवंलग्ने
नान्विताःसप्तखेटास्तेकिंनस्युःप्राणिनांजन्मभानि १२ पुंसामतोऽष्टौकिलराशयःस्युः शुभाशुभान्यत्रफलानितेभ्यः ।
ततश्चरेखामिलनांतरालात्स्पष्टंफलंचाष्टकवर्गयुक्तम् ।१३।स्यान्मंदात्कुजतोरविर्मितितपोलाभार्थकेंद्रास्थितःशुक्राद्स्त 
रिपुव्ययेषुचगुरोर्धर्मारिपुत्राप्तिषु । चंद्रात्त्राप्तिरिपुत्रिखेषुशशिजाप्तंषात्रिनंदव्ययारिप्राप्त्यभ्रगतस्तनोस्त्रिषुसुखो

पांत्यारिरिःफंशुभः १४भौमाद्‌ग्लौर्नवधीधनोपचयगःषट्‌त्र्याप्तिधीस्थोर्कजाल्लग्नाच्चोपचयोरवेरुपचयाष्टास्तेषुशस्तो बुधात्। धीरंध्रेषुचषट्यत्रिषुगुरोःकेंद्राष्टलाभव्ययेस्वाद्केोपचयास्तगास्त्रिखभवास्तांबुत्रिकोणेभृगोः । १५ । स्वाद्भौमोष्ट चतुष्टयायधनगोजीवात्षडायांत्यखेचंद्राद्दायारिपुत्रिगोभृगुसुताद्षांत्यलाभारिगः। ज्ञात्पंचायारिपुत्रिगोर्कतनयात्केंद्राष्ट धर्मांत्यगःसूर्याच्चोपचयात्मजेषुतनुतस्त्र्यायारिखायेशुभः।१६। शुक्रादासुतधर्मलाभमृतिगःसौम्यःकुजार्क्योस्तपःकें द्रायाष्टधनेस्वतोप्युपचयांत्यैकत्रिकोणेशुभः। कोणांत्यारिभवेरवेरिपुभवाष्टांत्येगुरोरिंदुतःखायाष्टारिसुखार्थगःखखभवा ष्टैकांबुषट्सूदयात्।१७। स्वात्स्वायाष्टत्रिकेंद्रस्वनवदशभवारातिधीस्थश्चशुक्राल्लग्नात्केंद्रायधीषट्स्वनवसुचकुजात् स्वाष्टकेंद्रायइज्यःइंदोर्धूनोर्थकोणाप्तिषुसहजनवाष्टायकेंद्राष्टगोर्काज्ज्ञात्कोणेव्यायखायांबुधीरिपुशनस्त्र्यंत्यधीषट्सुश स्तः।१८। खास्तांत्याहितवर्जितेषुतनुतःशुक्रोविनास्तारिखंचंद्रात्स्व.न्मदनव्ययारिरहितेष्वर्काद्व्ययाष्टाप्तिषुमंदाद्व्येक रिपुव्ययास्त्वरहितेष्वीज्यान्नवायाष्टधीखेज्ञात्कोणभवत्रिषट्सुभबधीत्र्यंत्यारिधर्मेकुजात्।१९।स्वान्मंदात्त्रिषडायधीषु रवितोष्टायाद्विकेंद्रेशुभोभौमात्खायषडंत्यधीत्रिषुतनोःखायांबुषट्त्र्येखगःज्ञादायारिनवांत्यखाष्टसुभृगोरंत्यायषट्सांस्थि तश्चंद्राद्दायारिपुत्रिगःसुरगुरोरंत्यायधीशत्रुगः । २० । स्थानानियानिप्रतिपादितानिशुभानिचान्यान्यशुभानिनूनम्।

## अथरवेरष्टवर्गांकाः ४८

| र | चं | मं | बु | बृ | शु | श | ल |
|---|---|---|---|---|---|---|---|
| १ | ३ | १ | ३ | ५ | ६ | १ | ३ |
| २ | ६ | २ | ५ | ६ | ७ | २ | ४ |
| ४ | १० | ३ | ६ | ९ | १२ | ४ | ६ |
| ७ | ११ | ७ | ९ | १० | ० | ७ | १० |
| ८ | ८ | ८ | १० | ० | ० | ८ | ११ |
| ९ | ० | ९ | ११ | ० | ० | ९ | १२ |
| १० | ० | १० | १२ | ० | ० | १० | ० |
| ११ | ० | ११ | ० | ० | ० | ११ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

## चंद्रस्याष्टवर्गांकाः ४९

| चं | मं | बु | बृ | शु | श | ल | र |
|---|---|---|---|---|---|---|---|
| १ | २ | १ | १ | ३ | ३ | ३ | ३ |
| ३ | ३ | ३ | ४ | ४ | ५ | ५ | ६ |
| ६ | ५ | ४ | ७ | ५ | ६ | ६ | ७ |
| ७ | ६ | ५ | ८ | ७ | ११ | ११ | ८ |
| १० | ९ | ७ | १० | ९ | ० | ० | १० |
| ११ | १० | ८ | ११ | १० | ० | ० | ११ |
| ८ | ११ | १० | १२ | ११ | ० | ० | ० |
| ० | ० | ११ | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

## अथभौमस्याष्टवर्गांकाः ३९

| मं | बु | बृ | शु | श | ल | र | मं |
|---|---|---|---|---|---|---|---|
| १ | ३ | ६ | ६ | १ | १ | ३ | ३ |
| २ | ५ | १० | ९ | ४ | ३ | ५ | ६ |
| ४ | ६ | ११ | ११ | ७ | ६ | ६ | ११ |
| ७ | १२ | १२ | १२ | ८ | १० | १० | ० |
| ८ | ० | ० | ० | ९ | ११ | ११ | ० |
| १० | ० | ० | ० | १० | ० | ० | ० |
| ११ | ० | ० | ० | ११ | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

## अथबुधस्याष्टवर्गांकाः ५४

| बु | बृ | शु | श | ल | र | चं | मं |
|---|---|---|---|---|---|---|---|
| १ | ६ | १ | १ | १ | ५ | ४ | १ |
| ३ | ८ | २ | २ | २ | ६ | ५ | २ |
| ५ | ११ | ३ | ४ | ४ | ९ | ६ | ४ |
| ६ | १२ | ४ | ७ | ६ | ११ | ८ | ७ |
| ९ | ० | ५ | ८ | ९ | १२ | १० | ८ |
| १० | ० | ८ | ९ | ११ | ० | ११ | ९ |
| ११ | ० | ९ | १० | १२ | ० | ० | १० |
| १२ | ० | ११ | ११ | ० | ० | ० | ११ |
| ० | ० | ० | ० | ० | ० | ० | ० |

अथगुरोरष्टवर्गांकाः ५६

| गु | शु | श | ल | र | चं | मं | बु |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | १ | १ | २ | १ | १ |
| २ | ५ | ५ | २ | २ | ५ | २ | २ |
| ३ | ६ | ६ | ४ | ३ | ७ | ४ | ४ |
| ४ | ९ | १२ | ५ | ४ | ९ | ७ | ५ |
| ७ | १० | ० | ६ | ७ | ११ | ८ | ६ |
| ८ | ११ | ० | ७ | ८ | ० | १० | ९ |
| १० | ० | ० | ९ | ९ | ० | ११ | ११ |
| ११ | ० | ० | १० | १० | ० | ० | ११ |
| ० | ० | ० | ११ | ११ |  | ० | ० |

अथशुक्रस्याष्टवर्गांकाः ३९

| शु | श | ल | र | चं | मं | बु | गु |
|---|---|---|---|---|---|---|---|
| १ | ३ | १ | ८ | १ | ३ | ३ | ५ |
| २ | ४ | २ | ११ | २ | ५ | ५ | ८ |
| ३ | ५ | ३ | १२ | ३ | ६ | ६ | ९ |
| ४ | ८ | ४ | ० | ४ | ९ | ९ | १० |
| ५ | ९ | ५ | ० | ५ | ११ | ११ | ११ |
| ८ | १० | ८ | ० | ८ | १२ | ० | ० |
| ९ | ११ | ९ | ० | ९ | ० | ० | ० |
| १० | ० | ११ | ० | ११ | ० | ० | ० |
| ११ | ० | ० | ० | १२ | ० | ० | ० |

अथशनेरष्टवर्गांकाः

| श | ल | र | चं | मं | बु | गु | शु |
|---|---|---|---|---|---|---|---|
| ३ | ३ | १ | ३ | ३ | ६ | ५ | ६ |
| ५ | ४ | ३ | ६ | ५ | ८ | ६ | ११ |
| ६ | ६ | ४ | ११ | ६ | ९ | ११ | १२ |
| ११ | ९ | ७ | ० | १० | १० | १२ | ० |
| ० | १० | ८ | ० | ११ | ० | ० | ० |
| ० | ११ | १० | ० | १२ | १२ | ० | ० |
| ० | ० | ११ | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

इत्यष्टवर्गांकाः समाप्ताः

तयोर्वियोगादधिकंफलंयत्स्वरा
शितोयच्छतितद्ग्रहेंद्रः। २१।
भुजंगवेदानवसागराऽश्वनवा
श्रयःसागरसायकाश्च । रसेष
वोयुग्मशरानवात्रितुल्याःक्रमे
णाष्टकवर्गलेखाः। २२। विल
ग्ननाथाश्रितराशितोत्रभवंतिरे
खाःखलुयत्रयत्र। विलग्नतस्तत्र
चतत्रराशौसंस्थापनीयाःसुधि
याक्रमेण। २३। क्लेशोऽथहा

निर्व्यसनंसमत्वंशश्वत्सुखंनित्यधनागमश्च ॥ संपत्प्रवृद्धिर्विपुलामलश्रीःप्रत्येकरेखाफलमामनंति ॥ २४ ॥ इत्येकखे
टस्याहिसंप्रदिष्टारेखायुतिश्चाखिलखेटरेखाः ॥ अष्टाद्विसंख्यास्तुसमास्ततोपियथाधिकोनाःसदसत्फलास्ताः ॥ २५ ॥
कःकदाफलदातेत्याशंक्याह ॥ इलातनूजश्चपतिर्नलिन्याःप्रवेशकालेफलदःकिलस्यात् । राश्यर्धभोगेभृगुजामरेज्यौ
प्रांतेशनींदूचसदेंदुसूनुः । २६ । शिरःप्रदेशेवदनेदिनेशोवक्षःस्थलेचापिग[illegible]कलावान् । पृष्ठोदरेभूतनयःप्रभुत्वंकरोतिसौ
म्यश्चरणेचपाणौ ॥ २७ ॥ कटिप्रदेशेजघनेचजीवःकविस्तुगुह्येस्थलमुष्कयुग्मे ॥ जानूरुदेशेनलिनीशसूनुश्चारेणवा
जन्मनिचिंतनीयम् । २८ । यदायदास्यात्प्रतिकूलवर्तीस्वांगेस्वदोषेणकरोतिपीडाम् । इदंतुपूर्वंप्रविचार्यसर्वंप्रश्नेप्र
सूत्यादिषुकल्पनीयम् ॥ २९ ॥ इत्यष्टवर्गाध्यायः । अथद्विग्रहयोगाध्यायः ॥ पाषाणयंत्रक्रयविक्रयेषुकूटक्रियायांच
विचक्षणःस्यात् ॥ कामीप्रकामीपुरुषःसगर्वःसर्वौषधीशेनरवौसमेते ॥ १ ॥ भवेन्महौजाबलवान्विमूढागाढोद्धतास
त्यवचामनुष्यः । सुसाहसःशूरतरोतिहिंस्रोदिवामणौक्षोणिसुताभ्युपेते । २ । प्रियवचाःसचिवोबहुसेवयार्जितधनश्च
कलाकुशलोभवेत् । श्रुतपटुर्हिनरोनलिनीपतौकुमुदिनीपतिसूनुसमन्विते । ३ । आचारहीनःकुटिलःप्रतापीपण्यानुजी
वीकलहप्रियश्च । स्यान्मातृशत्रुर्मनुजोरुजार्तःशीतद्युतौभूसुतसंयुतेवै । ४ । पुरोहितत्वेनिपुणोनृपाणांमंत्रीचमित्राप्त

धनःसमृद्धः। परोपकारीचतुरोदिनेशेवाचामधीशेनयुतेनरःस्यात् । ५। संगीतवाद्यायुधचारुबुद्धिर्भवेन्नरोनेत्रबलेनही
नः। कांतानिमित्ताप्तसुहृत्समाजःसितान्वितेजन्मनिपद्मिनीशे ।६। धातुक्रियापण्यमतिर्गुणज्ञोधर्मप्रियःपुत्रकलत्रसौ
ख्यः। सदासमृद्धोतितरांनरःस्यात्प्रद्योतनेभानुसुतेनयुक्ते। ७। सद्वाग्विलासोधनवान्सुरूपःकृपार्तचेताःपुरुषोविनीतः
कांतापरप्रीतिरतीववक्ताचंद्रेसचांद्रौबहुधर्मकृत्स्यात् । ८। सदाविनीतोदृढगूढमंत्रःस्वधर्मकर्माभिरतोनरःस्यात् । प
रोपकारादरतैकचित्तःशीतद्युतौवाक्पतिनासमेते। ९। वस्त्रादिकानांक्रयविक्रयेषुदक्षोनरःस्याद्व्यसनीविधिज्ञः॥ सुगंध
पुष्पोत्तमवस्त्रचित्तोद्विजाधिराजेभृगुजेनयुक्ते। १०। नानांगनानांपरिसेवनेच्छोवेश्यानुवृत्तिर्गतसाधुशीलः। परात्म
जःस्यात्पुरुषार्थहीनइंदौसमंदेप्रवदंतिसंतः। ११ । बाहुयुद्धकुशलोविपुलस्त्रीलालसोविविधभेषजपण्यः। हेमलोह
विधिबुद्धिविभावःसंभवेयदिकुजेंदुजयोगः ।१२। मंत्रार्थशास्त्रार्थकलाकलापेविवेकशीलोमनुजःकिलस्यात्। चमूप
तिर्वानृपतिःपुरेशोग्रामेश्वरोवासकुजेसुरेज्ये ।१३। नानांगनाभोगविधानचित्तोद्यूतानृतप्रीतिरतिप्रपंचः। नरःसग
र्वःकृतसर्ववैरोभृगोःसुतेभूसुतसंयुतेस्यात् ।१४। शस्त्रास्त्रवित्संगरकर्मकर्तास्तेयानृतप्रीतिकरःप्रकामम्। सौख्येन
हीनोतितरांनरःस्याद्धरासुतेमंदयुतेऽतिनिंद्यः ।१५। संगीतविन्नीतिपतिर्विनीतःसौख्यान्वितोऽत्यंतमनोभिरामः।

धीरोनरःस्यात्सुतरामुदारःसुगंधभाग्वाग्पतिसौम्ययोगे । १६ । कुलाधिशालीशुभवाग्विलासःसदासहर्षःपुरुषःसुवे
षः। भर्त्ताबहूनांगुणवान्विवेकीसभार्गवेजन्मनिसोमसूनौ । १७ । चलस्वभावश्चकलिप्रियोपिकलाकलापेकुशलः सु
शीलः। पुमान्बहूनांप्रतिपालकश्चेद्भवेत्प्रसूतौमिलनंज्ञशन्योः । १८ । विद्ययाभवतिपंडितःसदापंडितैरपिकरोति
विवादम्। पुत्रमित्रधनसौख्यसंयुतोमानवःसुरगुरौभृगुयुक्ते। १९ । शूरोर्थवान्ग्रामपुराधिनाथोभवेद्यशस्वीकुशलः
कलासु। स्त्रीसंश्रयप्राप्तमनोरथश्चनरःसुरेज्येरविजेनयुक्ते । २० । शिल्पलेख्यविधिजातकौतुकोदारुणोरणकरोन
रोभवेत्। अश्मकर्मकुशलश्चजन्मनिभार्गवेरविसुतेनसंयुते ।२१। इतिद्विग्रहयोगाध्यायः। अथत्रिग्रहयोगाध्यायः॥
शूराश्चयंत्राश्वविधिप्रवीणास्त्रपाकरूपाभ्यांसुतरांविहीनाः। नक्षत्रनाथक्षितिपुत्रमित्रैरेकत्रसंस्थैर्मनुजाभवंति । १ । भ
वेन्महौजानृपकार्यकर्त्तावार्ताविधौशास्त्रकलासुदक्षः॥ दिवामणिज्ञामृतरश्मिसंस्थैःप्राणीभवेदेकगृहप्रयातैः॥ २॥ से
वाविधिज्ञश्चविदेशगामीप्राज्ञःप्रवीणश्चपलोतिधूर्त्तः। नरोभवेच्चंद्रसुरेंद्रवंद्यप्रद्योतनानांमिलनेप्रसूतौ। ३ । परस्वह
र्त्ताव्यसनानुरक्तोविमुक्तसत्कर्मरुचिर्नरःस्यात् ॥ मृगांकपंकेरुहबंधुशुक्राश्चैकत्रभावेयदिसंयुताःस्युः ॥ ४ ॥ परेंगित
ज्ञोविधनश्चमंदोधातुक्रियायांनिरतोनितांतम् ॥ व्यर्थप्रयासप्रकरोनरःस्यात्क्षेत्रेयदैकत्ररवींदुमंदाः ॥ ५॥ ख्यातोभ

वेन्मंत्रविधिप्रवीणःसुसाहसोनिष्ठुरचित्तवृत्तिः। लज्जार्थजायात्मजमित्रमुक्तोयुक्तैर्बुधार्कक्षितिजैर्नरःस्यात्। ६। वक्रार्थ युक्तःक्षितिपालमंत्रीसेनापतिर्नीतिविधानदक्षः। महन्मनाःसत्यवचोविलासःसूर्यारजीवैःसहितैर्नरःस्यात्। ७। भाग्यान्वितोत्यंतमतिर्विनीतःकुलीनवान्शीलविराजमानः। स्यादल्पजल्पश्चतुरोनरश्चेद्यौमास्फुजित्सूर्ययुतिःप्रसूतौ। ८। धनेनहीनःकलहान्वितश्चत्यागीवियोगीपितृबंधुवर्गैः। विवेकहीनोमनुजःप्रसूतौयोगोयदार्किरशनैश्चराणाम्। ९। विचक्षणःशास्त्रकलाकलापेसुसंग्रहार्थःप्रबलःसुशीलः। दिवाकरज्ञामरपूजितानांयोगेभवेन्नानयनामयार्त्तः। १०। साधुद्वेषीनिंदितोऽत्यंततप्तःकांताहेतोर्मानवःसंयुताश्चेत्। दैत्यामात्यादित्यसौम्यास्यखेटावाचालःस्याद्न्यदेशाटनश्च। ११। तिरस्कृतस्वीयजनैश्चहीनोप्यन्यैर्महद्वेषकरोनरःस्यात्। षंढाकृतिर्हीनतरानुयातश्चादित्यमंदेंदुसुतैःसमेतैः। १२। अप्रगल्भवचनोधनहीनोप्याश्रितावनिपतेर्मनुजःस्यात्। शूरताप्रियतरःपरकार्येसादरोर्कगुरुभार्गवयोगे। १३। नृपप्रियामित्रकलत्रपुत्रैर्नित्यंयुतःकांतवपुर्नरःस्यात्। शनैश्चराचार्यदिवामणीनांयोगेसुनीत्याव्ययकृत्प्रगल्भः। १४। रिपुभयपरियुक्तःसत्कथाकाव्यमुक्तःकुचरितरुचिरेवात्यंतकंडूयनार्तः। निजजनधनहीनोमानवःसर्वदास्यात्कविरविरविजानांसंयुतिश्चेत्प्रसूतौ। १५। भवंतिदीनाधनधान्यहीनानानाविधानात्मजनापमानाः। स्युर्मा

नवाहीनजनानुयाताश्चेत्संयुताःक्षोणिसुतेंदुसौम्याः। १६ ।व्रणांकितःकोपयुतश्चहर्त्ताकांतारतःकांतवपुर्नरःस्यात्।
प्रसूतिकालेमिलिताभवंतिचेदारनीहारकरामरेज्याः। १७। दुःशीलकांतापतिरस्थिरःस्याद्दुःशीलकांतातनुजोल्पशी
लः।नरोभवेज्जन्मनिचैकभावाभौमास्फुजिच्चंद्रमसोयादिस्युः। १८ ।शैशवेहिजननीमृतिप्रदःसर्वदापिकलहान्वि
तोभवेत्॥ संभवेरविभवेंदुभूसुताःसंयुतायादिनरोऽतिगर्हितः ॥ १९ ॥ विख्यातकीर्तिर्मतिमान्महौजाविचित्रमित्रो
बहुभाग्ययुक्तः ॥ सद्वृत्तविद्योऽतितरांनरःस्यादेकत्रसंस्थैर्गुरुसोमसौम्यैः॥ २० ॥ विद्याप्रवीणोपिचनीचवृत्तःस्पर्धा
भिवृद्ध्यांचरुचिर्विशेषात् ॥ स्यादर्थलुब्धोहिनरःप्रसूतौमृगांकसौम्यास्फुजितांयुतिश्चेत् ॥ २ ॥ कलाकलापामलबुद्धि
शालीस्यातःक्षितीशाभिमतोनितांतम् । नरःपुनर्ग्रामपतिर्विनीतोबुधेंदुमंदाःसहितायादिस्युः। २२। भाग्यभाग्भवति
मानवःसदाचारुकीर्तिमतिवृत्तिसंयुतः॥ भार्गवेंदुसुरराजपूजिताःसंयुतायादिभवंतिसंभवे। २३। विचक्षणःक्षोणिपति
प्रियश्चसन्मंत्रशास्त्राधिकृतोनितांतम्। भवेत्सुवेषोमनुजोमहौजाःसंयुक्तमंदेंदुसुरेंद्रवंद्यैः। २४। पुरोधसावेदविदांवरे
ण्याःस्युःप्राणिनःपुण्यपरायणाश्च ॥ सत्पुस्तकालोकनलेखनेच्छाःकवींदुमंदामिलितायादिस्युः। २५। क्ष्मापालकः
स्त्रीयकुलेनरःस्यात्कवित्वसंगीतकलाप्रवीणः॥ परार्थसंसाधकतैकचित्तोवाचस्पतिज्ञावनिसूनुयोगे ॥ २६। वित्तान्वि

तःक्षीणकलेवरश्चवाचालताचंचलतासमेतः ॥ धृष्टःसदोत्साहपरोनरःस्यादेकत्रयातैःकविभौमसौम्यैः ॥ २७ ॥ कुलो
च्चनःक्षीणतनुर्वनस्थःप्रेष्यःप्रवासीबहुहास्ययुक्तः।स्यान्नोसहिष्णुश्चनरोपराधीमंदारसौम्यैःसहितैःप्रसूतौ।२१।सत्पुत्र
दारादिसुखैरुपेतःक्ष्मापालमान्यःसुजनानुयातः। वाचस्पतिक्षोणिसुतास्फुजिद्भिःक्षेत्रेयदैकत्रगतैर्नरःस्यात् । २९ । नृ
पाप्तमानंकृपयाविहीनंकृशंकुवृत्तंगतमित्रसख्यम् । जन्यांचजन्यांगिरसावनीजाःसंयोगभाजामनुजंप्रकुर्युः।३०।वासो
विदेशेजननीत्वनार्याभार्यातथैवोपहतिःसुखनाम्। दैत्येंद्रपूज्यावनिजार्कजानांयोगेभवेज्जन्मनरस्ययस्य ॥ ३१ ॥ नृपा
नुकंपोबहुगीतकीर्तिःप्रसन्नमूर्तिर्विजितारिवर्गः। सौम्यामरेज्यास्फुजितांप्रसूतौचेत्संयुतिःसत्वपरोनरःस्यात्।३२।स्था
नार्थसद्वैभवसंयुतःस्यादनल्पजल्पोधृतिमान्सुवृत्तः।शनैश्चराचार्यशशांकपुत्राःक्षेत्रेयदैकत्रगताभवंति ॥ ३३ । साधुशी
लरहितोनृतवक्तानल्पजल्पनरुचिःखलुधूर्तः। दूरयाननिरतश्चकलाज्ञोभार्गवज्ञशनिसंयुतिजन्मा । ३४। नीचान्वयेय
द्यपिजातजन्मानरःसुकीर्तिःपृथिवीपतिःस्यात् ॥ सद्वृत्तिशालीपरिसूतिकालेमंदेज्यशुक्रामिलितायदिस्युः।३५।पापा
न्वितेशीतरुचौजनन्यानूनंभवेन्नैधनमामनंति।तादृग्दिनेशःपितृनाशकर्त्तामिश्रेविमिश्रंफलमत्रकल्प्यम्।३६।शुभान्वि
तोजन्मनिशीतरश्मिर्यशोर्थभूकीर्तिविवृद्धिलब्धिम्।करोतिजातंसकलप्रदीपंश्रेष्ठप्रतिष्ठंनृपगौरवेण।३७।एकालयेचे

त्खलखेचराणांत्रयंकरोत्येवन रंकुरूपं। दारिद्र्यदुःखैःपरित प्तदेहंकदापिगेहंनसमाश्रयेत्स ॥३८॥ इतिजातकाभरणेत्रिग्र हयोगाध्यायः। अथराजयोगा

अथैषांयोगानांन्यासः

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र चं मं | र चं बु | र चं गु | र चं भृ | र चं श | र बु मं | र मं गु | र मं भृ | र मं श | र बु गु | र बु भृ | र बु श | र भृ गु | र गु श | र भृ श | चं मं बु | चं मं गु | चं मं भृ |
| १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ |
| चं मं श | चं बु गु | चं भृ बु | चं बु श | चं गु भृ | चं गु श | चं भृ श | मं बु गु | मं बु भृ | मं बु श | मं गु भृ | मं गु श | चं भृ श | बु गु भृ | बु गु श | बु भृ श | गु भृ श | ० ० ० ० |

लिख्यंते॥ साह्लिलासकलगर्जनशीलःशुंडिकावलयकृत्प्रातिवेलम्। अस्तुवःकलितभालतलेंदुर्मंगलायकिलमंगलमूर्तिः॥१॥भा ग्यादिभावप्रतिपादितंयद्भाग्यंभवेत्तत्खलुराजयोगैः।तान्विस्तरेणप्रवदामिसम्यक्कृतैःसार्थकंजन्मयतोनराणाम्॥२॥नभ श्चराःपंचानि जोच्चसंस्थायस्यप्रसूतौसतुसार्वभौमः।त्रयःस्वतुंगादिगताःसराजाराजात्मजोऽन्यस्यसुतोऽत्रमंत्री॥३॥तुंगो प गायस्यचतुर्नभोगामहापगासंतरणेबलानाम्। दंतावलानांकिलसेतुबंधाःकीर्तिप्रबंधावसुधातलेंते।॥४॥ स्वोच्चेसूर्यश नीज्यभूमितनयैर्यद्वात्रिभिर्लग्नगैस्तेषामन्यतमोहिषोडशमिताःश्रीराजयोगाःस्मृताः।तन्मध्येनिजतुंगगग्रहयुगेयद्वैकखेटे

विधौस्वर्क्षेतुंगसमाश्रितैकखचरेलग्नेपरेषोडश । ५ । वर्गोत्तमेमृतकरेयदिवाशरीरेसंवीक्षितेचचतुरादिभिरिंदुहीनैः द्वा
विंशतिप्रमितयःखलुसंभवंतियोगाःसमुद्रवलयक्षितिपालकानाम् । ६ । उदग्वसिष्ठोभृगुजश्चपश्चात्प्राग्वाक्पतिर्दक्षि
णतस्त्वगस्त्यः । प्रसूतिकालेसभवेदिलायानाथोहिपाथोनिधिमेखलायाः ।७। स्वोच्चेमूर्तिगतेऽमृतांशुतनयेनक्रेसवक्रेश
नौचापेवागाधिपेंदुभार्गवयुतेस्याज्जन्मभूमीपतेः । स्वस्थानेननुयस्यभूमितुरगोमत्तेभमालामिलत्सेनांदोलितभूमिगोल
कलनंदिग्दंतिनःकुर्वते ॥ ८ ॥ दिनाधिराजेमृगराजसंस्थेनक्रेसवक्रेकलशेऽर्कसूनौ । पाठीनलग्नेशशिनासमेतेमहीपतेर्ज
न्ममहौजसःस्यात् ॥ ९ ॥ महीसुतेमेषगतेतनुस्थेबृहस्पतौवातनुगेस्वतुंगे । योगद्वयेस्मिन्नृपतीभवेतांजितारिपक्षौनृप
नीतिदक्षौ ।१०। वाचस्पतिःस्वोच्चगतोविलग्नेमेषेदिनेशःशनिशुक्रसौम्याः । लाभालयस्थाःकिलभूमिपालंतंभूतलस्या
भरणंगृणंति ।११। मंदोयदानक्रविलग्नवर्तीमृगेंद्रयुग्माजतुलाकुलीराः । स्वस्वामियुक्ताजनयंतिनाथंपाथोनिधिप्रांतम
हीतलस्य । १२ । द्वंद्वेदैत्यगुरौनिशाकरसुतेमूर्तौस्वतुंगेस्थितेनक्रेवक्रशनैश्चरेचशफरेचंद्रामरेज्यौस्थितौ । योगोयं
प्रभवेत्प्रसूतिसमयेयस्यावनीशोमहान्वैरिव्रातमहोद्धतेभदलनेपंचाननःकेवलम् । १३ । सिंहोदयेर्कस्त्वजगोमृगांकः
शनैश्चरःकुंभधरेसुरेज्यः । धनुर्धरेचेन्मकरेमहीजोराजाधिराजोमनुजोभवेत्सः । १४। मेषेगतोमूर्तिगतःप्रसूतौबृहस्प

तिश्चास्तगतःकलावान् । रसातलेव्योमगतेसितश्चेन्महीपतिर्गीतदिगंतकीर्तिः । १५ । गुरुःकुलीरोपगतःप्रसूतौस्मा
रांबुखस्थाभृगुमंदभौमाः । तद्यानकालेजलधेर्जलानिभेरीनिनादोच्छलनंप्रयांति । १६ । प्रसूतिकालेस्फुरदंशुजालः
षड्वर्गशुद्धोदितभेस्वभेवा । तुंगेत्रिकोणेसनभश्चरेंद्रोनरंप्रकुर्यात्खलुसार्वभौमम् । १७ । षड्वर्गशुद्धौखचरद्वयंचेच्यथो
क्तरीत्याजननेनरस्य । तस्याधिपत्यंखलुकिन्नरेषुद्वीपांतरेचात्रनाकिंधरायाम् । १८ । तुंगत्रिकोणाद्यधिकारहीनैःषड्वर्ग
शुद्धैस्त्रिभिरेवमंत्री । राजाचतुर्भिःखलुसार्वभौमःपंचादिभिर्नाकपतिर्नैककेन । १९ । वृषेशशीलग्नगतोंबुसप्तखस्थार
वीज्यार्कसुताभवंति । तद्दंडयात्रासुरजोंधकाराद्दिनेऽपिरात्रिःकुरुतेप्रवेशम् । २० । गुर्विंदुसौम्यास्फुजितश्चयस्यमूर्ति
त्रिधर्मायगताभवंति ॥ मृगेऽर्कसूनुस्तनुगोऽत्रनूनमेकातपत्रांसभुनक्तिधात्रीम् ॥ २१ ॥ तुंगस्थितौशुक्रबुधौविलग्नेनक्रे
चवक्रोधनुषीज्यचंद्रौ ॥ प्रसूतिकालेकिलतौभवेतामाखंडलौभूमितलेऽपिसंस्थौ ॥ २२ ॥ कर्केऽर्कचंद्रौसुरराजमंत्रीशत्रु
स्थितश्चापिबुधःस्वतुंगे।कश्चिद्बलीलग्नगतःसराजाराजाधिराजाभिधयासमेतः।२३।गुरुर्निजोच्चेयदिकेंद्रशालीराज्या
लयेदानवराजपूज्यः ॥ प्रसूतिकालेकिलतस्यमुद्राचतुःसमुद्रावधिगामिनीस्यात् ॥ २४ ॥ देवाचार्यदिनेश्वरौक्रियगतौ
मेषूरणेक्षोणिजःपुण्येभार्गवसौम्यशीतकिरणायस्यप्रसूतौस्थिताः ॥ नूनंदिग्विजयप्रयाणसमयेसैन्यैरिलाव्याकुलाचिं

तामुद्वहतीतिकागतिरहोसर्वसहास्ख्यास्थितैः ॥ २५ ॥ नीचारातिलवोज्झिताबलयुताःसंत्यक्तवैरापरंस्फारस्कांतिधरा
भवंतिखचराःसंस्थोवृषेभार्गवः । मातृणांयदिमंडलेसमुदितोजीवोभवेत्संभवेद्देवैस्तुल्यपराक्रमःसचनृपःकोपत्रमृष्टाहि
तः । २६ । मेषोदयेऽर्कश्चगुरुःकुलीरेतुलाधरेमंदविधूभवेतां ॥ भवेन्नृपालोऽमलकीर्तिशालीभूपालमालापरिपालिता
ज्ञः ॥ २७ ॥ मीनेनिशाकरःपूर्णःसर्वग्रहनिरीक्षितः ॥ सार्वभौमंनरंकुर्यादिंद्रतुल्यपराक्रमम् ॥ २८ ॥ धनेदिनेशाद्भृ
गुर्जीवसौम्यानास्तंगतानोरिपुदृष्टियुक्ताः ॥ स्यात्संकटंतत्कटकारिपूणांयशःपटोदिग्वसनायनूनम् ॥ २९ ॥ सत्वोपेतः
शुभजननपःपूर्णचंद्रंप्रपश्येद्यस्योत्पत्तौभवतिनृपतिर्निर्जितारातिपक्षः । यात्राकालेगजहयरथात्यंततूर्यस्वनानांब्रह्मांड
नोऽखिलमपिभवेत्पूरणार्थंसमर्थम् ॥ ३० ॥ स्वोच्चेषुवाचस्पतिसूर्यशुक्राःशनीक्षितःशीतरुचिर्निजोच्चे ॥ यद्यानकालेर
जसोवितानंरुणद्धिसूर्याश्वविलोचनानि । ३१ । नास्तंयाताःसुतगृहगताःसौम्यशुक्रामरेज्यानक्रेवक्रोरविरहितगोधर्मगो
यस्यमंदः ॥ यात्राकालेकिलकमलिनीपुष्पसंकोचकर्ताश्रीसूर्योपिप्रचलितदलोद्धूतधूलीकृतास्तः ॥ ३२ ॥ कन्यालग्नग
तेबुधेचाविबुधामात्येचजायास्थितेभौमकौसहजेऽर्कजोऽरिभवनेबुस्थेभृगोर्नंदने । योगेस्मिन्मनुजस्ययस्यजननंतच्छ्रा
सनंसर्वदाराजानःप्रवहंत्यलंसुविमलांमालेवमौलिस्थले । ३३ । मीनोदयेदानवराजपूज्यश्चंद्रामरेज्यौभवतःकुलीरे ॥ मे

षकेंभौमौनृपातिःकिलस्यादाखंडलेनापितुलांप्रयाति ॥ ३४ ॥ इतिनिगदितयोगैर्नीचवंशोद्भवोऽपिसभवतिपतिरुर्व्याः
किंपुनाराजसूनुःनरपतिकुलजातोवक्ष्यमाणैश्चयोगैर्भवतिनृपतिरेवंतत्समोऽन्यस्यसूनुः।३५। छायासुतोनक्राविलग्नया
तश्चास्तेप्रसूतौयादिपुष्पवंतौ। लाभेकुजेवैभृगुजोष्टमस्थःस्याद्भूपतिर्भूपकुलप्रसूतः । ३६ । सुरासुरेज्यौभवतश्चतुर्थे
ऽत्यर्थंसमर्थः पृथिवीपातिःस्यात् । कर्कस्थितोदेवगुरुःसचंद्रःकाश्मीरदेशाधिपतिंकरोति । ३७। सुरासुरेज्यास्थितदृष्टि
रिंदुः स्वोच्चस्थितोभूमिपतिंकरोति । विलोकयंतः परिपूर्णचंद्रंशुक्रज्ञजीवाजनयंतिभूपम् । ३८ । पश्यन्मृगांकात्मज
मिंदुमंत्रीविचित्रसंपन्नृपतिंकरोति । एकोपिखेटोयदिपंचमांशेप्रसूतिकालेकुरुतेनृपालम् ॥ ३९ ॥ नक्षत्रनाथोप्य
धिमित्रभागेशुक्रेणदृष्टानृपतिंकरोति । स्वांशाधिमित्रांशगतोथवास्यार्ज्जीवेनदृष्टःकुरुतेनृपालम् ॥ ४० ॥ दिनाधिना
थोप्यधिमित्रभावेचंद्रेणसम्यक्प्रविलोकितोवा । स्यात्तस्कराणांनिचयेनृपालःसच्छीलशालीसुतरामुदारः ॥ ४१ ॥
स्वोच्चेस्थितः सोमसुतःससोमःकुर्यान्नरंमागधदेशराजम् । कलाधिशालीबलवान्कलावान्करोतिभूपंशुभधामसंस्थः ।
जन्मेश्वरोजन्मविलग्नपोवाकेंद्रेबलीनीचकुलेपिभूपम् । कुर्यादुदारंसुतरांपवित्रंकिमत्रचित्रंक्षितिपालपुत्रम् ॥ ४३ ॥
मेषेदिनेशः शशिनासमेतोयस्यप्रसूतौसतभूपतिःस्यात् । कर्णाटकद्राविडकेरलांध्रदेशाधिपानामनुकूलवर्ती ॥ ४४ ॥

स्वतुंगगेहोपगतौसितेज्यौकेंद्रत्रिकोणेषुगतौभवेताम् । प्रसूतिकालेकुरुतेनृपालंनृपालजातंसचिवेंद्रमान्यम् ॥ ४५ ॥
प्रसूतिकालेमदनेधनेचव्ययेविलग्नेयदिसंतिखेटाः । तेछत्रयोगंजनयंतितस्यप्राक्पुण्यपाकाभ्युदयोहियस्य ॥ ४६ ॥
पापोविलग्नेयदियस्यसूतौदृष्टोभवेच्चित्राशिखंडिजेन ॥ कर्केगुरुर्ब्राह्मणदेवभक्तः प्रासादवापीपुरकृन्नरःस्यात् ॥ ४७ ॥
एकोपिशस्तःशुभदःस्वतुंगेकेंद्रेपतंगोबलवान्प्रदृष्टः । सुतास्थितेनामरपूजितेनचेन्मानवोमानवनायकःस्यात् । ४८ ।
मृगराशिंपरित्यज्यास्थितोलग्नेबृहस्पतिः । करोतिपृथिवीनाथंमत्तेभपरिवारितम् । ४९ । कलाकलापाधिकृताधिशा
लीचंद्रोभवेज्जन्मनिकेंद्रवर्त्ती । विहायलग्नंकुरुतेनृपालंलीलाविलासाकलितारिवृंदम् ॥ ५० ॥ केंद्रगःसुरगुरुःसशशां
कोयस्यजन्मनिचभार्गवदृष्टः । भूपतिर्भवतिसोतुलकीर्तिर्नीचपोनयदिकार्इचादिहस्यात् ॥ ५१ ॥ धनास्थिताःसौम्यासि
तामरेज्यामंदारिचंद्रायदिसप्तमस्थाः । यस्यप्रसूतौसतुभूपतिः स्यादरातिदंतिक्षतिसिंहएव ।५२। कुंभाष्टमांशेशशि
नित्रिकोणमेषेऽद्रिभागेधरणीसुतेवा । द्वद्वैकविंशांशगतेऽथवाज्ञयस्यप्रसूतौसतुभूपतिःस्यात् ।५३। कुंभस्यचेत्पंचदशे
त्रिभागेकर्कदशांशोपगतोविधुश्चेत् । तृतीयभागेधनुषींद्रवंद्यः सिंहेशशांकेप्यथवापिभूपः ॥ ५४ ॥ पुष्येश्विभेवाप्यथ
कृत्तिकासुवर्गोत्तमेपूर्णतनुःकलवान् ॥ करोतिजातंखलुसार्वभौमंत्रिपुष्करोत्थन्ननरोपिभूपः ॥ ५५ ॥ तिथिःसुभद्रावि

षमांघ्रिभेचेद्गुरेगुरुक्ष्मातनयार्कजानां । त्रिपुष्करोयोगइतिप्रदिष्टोवृद्धौचहानौत्रिगुणाप्तिकर्ता । ५६ । मैत्रेचेदास्त्रे
प्यथवात्मतुंगेवर्गोत्तमेभूमिसुतःकरोति महीपतिंपार्थिववंशजातंचान्यंप्रधानंधनिनंसमृद्धम् ।५७।चेद्भार्गवोजन्मनिय
स्यपुण्येमेषूरणेपूर्णतनुःशशांकः । अन्येग्रहालाभगताभवेयुःपृथ्वीपातिःपार्थिववंशजातः । ५८ । उपचयभवनस्थाःसर्वखे
टाःशशांकाद्रविगुरुशशिनश्चेद्भूमिसूनोर्भवंति ।त्रितनयनवमस्थाःकुर्वतेतेनरेंद्रंगजतुरगरथानांसंपदाराजमानम् ५९
सुखेसितज्ञौसहजेंबुजेशास्तिष्ठंतिखेटाःसुतधाम्निचान्ये।निजारिराशौनाहिकाश्चिदत्रधात्रीपतिश्चैककृतातपत्रः ६० ।
सिंहेकमलिनीभर्ताकुलीरस्थोनिशाकरः । दृष्टौद्वावपिजीवेनपार्थिवंकुरुतस्तदा । ६१ । बुधःकर्कटमारूढोवाक्पतिश्चध
नुर्धरे । रविभूसुतदृष्टौतौकुरुतःपृथिवीपतिं । ६२ ।शफरीयुगुलेचंद्रःकर्कटेचबृहस्पतिः । शुक्रःकुंभेभवेद्राजागजवाजि
समृद्धिभाक् । ६३ ।सितदृष्टःशनिःकुंभेपद्मिनीनायकोदये । चंद्रेजलचरेराशौयदिराजातदा भवेत् । ६४ । चेत्खेचरोनी
चगृहंप्रयातस्तदीश्वरश्चापितदुच्चनाथः ।केंद्रस्थितौतौभवतःप्रसूतौप्रकीर्तितौभूपतिसंभवाय ६५ । कृत्तिकारेवतीस्वा
तीपुष्यस्थायीभृगोःसुतः । करोतिभूभुजांनाथमश्विन्यामपिसंस्थितः । ६६ । राज्योपलब्धिर्दशमस्थितस्याविलग्नग
स्याप्यथवादशायां । तयोरभावेबलशालिनोवासद्राजयोगोयदिजन्मकाले । ६७ । इतिश्रीराजयोगाध्यायः । अथराज

काम०

योगसंगातिसामुद्रिकाध्यायः । प्रसूतिकालेप्रबलायदिस्युर्नृपालयोगाःपुरुषस्ययस्य। सद्राजचिन्हानिपदेतदीयेभवंति
वापाणितलेऽमलानि।१।अनामिकामूलगताप्रशस्तासाकीर्तितापुण्यविधानरेखा।मध्यांगुलेर्यामणिबंधमाप्तारा ज्याप्त
येसाचाकिलोर्ध्वरेखा।२।विराजमानंयवलांछनंचेदंगुष्ठमध्येपुरुषस्ययस्य। भवेद्यशस्वीनिजवंशभूषाभूषाविशेषैःसहि
तोविनीतः।३।चेद्वारणोवातपवारणोवावैसारिणःपुष्करिणीसृणिर्वा। वीणाचपाणौचरणेनराणांतेस्युर्नराणामधिपावरे
ण्याः। ४। आदर्शमालाकरवालशैलहलाश्चतत्पाणितलेमिलंति। स्यान्मांडलीकोवनिपालकोवाकुलेनृपालःकुलतार
तम्यात्। ५। चेद्यस्यपाणौचरणेचचक्रंधनुर्ध्वजाब्जव्यजनासनानि। रथाश्वदोलाकमलाविलासात्तस्यालयेस्युर्गजः
वाजिशालाः। ६। स्तंभस्तुकुंभस्तुतरुस्तुरंगोगदामृदंगोंऽघ्रिकरप्रदेशे। दंडोऽथवाखंडितराज्यलक्ष्म्यास्यान्मंडितः
पंडितशौंडकोवा।७।सुवृत्तमौलिस्तुविशालभालश्चाकर्णनीलोत्पलपत्रनेत्रः। आजानुबाहुंपुरुषंतमाहुर्भूमंडलाखंड
लमार्यवर्याः।८। नरस्यनासासरलाचयस्यवक्षस्थलंचापिशिलातलाभम्। नाभिर्गभीरातिमृदूभवेतामारक्तवर्णौचर
णौसभूपः। ९। प्रसन्नमूर्तिःसमुदारचेतावंशाभिमानःशुभवाग्विलासः। अनीतिभीरुर्गुरुसाधुनम्रःसाम्राज्यलक्ष्मींल
भतेमनुष्यः।१०। करतलेयदियस्यतिलोभवेदविरलःकिलतस्यधनागमः। पदतलेचातिलेनसमन्वितेनृपातिवाहनचि

न्हसमन्वितः।११।एतत्फलंराजकुलोद्भवानांस्यान्मानवानांमुनयोवदंति। प्रकल्पयेदन्यकुलोद्भवानांनूनंतदूनंस्वकु
लानुमानात्।१२।चिन्हानियानिप्रतिपादितानिव्यक्तानिसंपूर्णफलप्रदानि।वामेतरेंघ्रौचकरेनराणांधन्यानिवामेखलु
कामिनीनाम्।१३।इतिश्रीदैवज्ञ०राजयोगसंगातिकसामुद्रिकाऽध्यायः।अथराजयोगभंगाध्यायः॥शत्रुक्षेत्रगतैःसर्वै
र्वर्गोत्तमयुतैरपि।राजयोगाविनश्यंतिबहुभिर्नीचगैर्ग्रहैः।१। चंद्रंवायदिवालग्नंग्रहोनैकोपिवीक्षते । तथापिराजयो
गानांभंगमाहपराशरः।२। स्वांशेरवौशीतकरेविनष्टेदृष्टेचपापैःशुभदृष्टिहीने।कृत्वापिराज्यंच्यवतेमनुष्यःपश्चात्सुदुः
खंलभतेहताशः।३।उल्काव्यतीपातदिनेतथैवनैर्घातिकेकेतुसमुद्भवेवा।चेद्राजयोगेपिचयस्यसूतिर्नरोदरिद्रोतितरां
भवेत्सः॥४॥तुलायांनलिनीनाथःपरमंनीचमाश्रितः।निर्दिष्टराजयोगानांदलनायभवेद्ध्रुवम्॥५॥ मृगलग्नेसुराचार्यः
परमंनीचमाश्रितः॥राजयोगोद्भवस्यापिकुरुतेतिदरिद्रताम्।६। वाचस्पतावस्तगतेग्रहेंद्रास्त्रयोऽपिनीचेषुघटोविल
ग्ने।एकोपिनीचेदशमेपिपापोभूपालयोगाविलयंप्रयांति।७।प्रसूतौदानवामात्यःपरमंनीचमाश्रितः। करोतिपतनंनू
नंमानवानांमहापदात्।८।यदितनुभवनस्थोराहुरिंदुप्रदृष्टःसहजरिपुभवस्थाभानुमंदावनेयाः।शुभविरहितकेंद्रैरस्त
गैर्वापिसौम्यैर्भवतिनृपतियोगोव्यर्थएवेतिचिंत्यम्।९। केंद्रेषुशून्येषुशुभैर्नभोगैरस्तंगतैर्नीचगृहास्थितैर्वा। चतुर्ग्रहै

र्वाप्यरिमंदिरस्थैर्नृपालयोगाःप्रलयंप्रयांति ।१०। सर्वैपिपापायदिकंटकेषुनीचारिगानांशुभदृष्टियुक्ताः । नीचारिरिःफेषुचसौम्यसंज्ञाराज्ञांहियोगाविलयंप्रयांति ।११। इतिदैवज्ञ०राजयोगभंगाध्यायः । अथपंचमहापुरुषलक्षणानिनिरूप्यंते । येमहापुरुषसंज्ञकानृपाःपंचपूर्वमुनिभिःप्रकीर्तिताः । वच्मितान्सुसरलान्महोक्तिभीराजयोगविधिदर्शनेच्छया ।१। स्वगेहतुंगाश्रयकेंद्रसंस्थैरुच्चोपगैर्वावनिसूनुमुख्यैः । क्रमेणयोगारुचकाख्यभद्रहंसाख्यमालव्यशशाभिधानाः ।२। दीर्घायुःस्वच्छकांतिर्बहुरुधिरबलःसाहसावाप्तसिद्धिश्चारुभ्रूर्नीलकेशःसमकरचरणोमंत्रविच्चारुकीर्तिः ।रक्तःश्यामोतिशूरोरिपुबलमथनःकंबुकंठोमहौजाःक्रूरोभक्तोमराणांद्विजगुरुविनतःक्षामजानूरुजंघः ।३। खट्वांगपाशवृषकार्मुकचक्रवीणावज्रांकहस्तचरणःसरलांगुलःस्यात् ।मंत्राभिचारकुशलस्तुलयेत्सहस्रंमध्यंचतस्यगादितंमुखदैर्घ्यतुल्यम् ।४। सह्यस्यविंध्यस्यतथोज्जयिन्याःप्रभुःशरत्सप्ततिजीवितोसौ । शस्त्राग्निचिन्होरुचकाभिधानेदेवालयेतन्निधनंप्रयाति ।५। इतिरुचकः । अथभद्रः । शार्दूलप्रतिमाननोद्विपगतिःपीनोरुवक्षस्थलोलंबापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः। कामीकोमलसूक्ष्मरोमनिचयैःसंरुद्धगंडस्थलःप्राज्ञःपंकजगर्भपाणिचरणःसत्वाधिकोयोगवित् ।६। शंखासिकुंजरगदाकुसुमेषुकेतुचक्राब्जलांगलविचिन्हितपाणिपादः । यात्रागजेंद्रम

दवारिकृतार्द्रभूमिः सत्कुंकुमप्रतिमगंधतनुः सुघोषः ॥ ७ ॥ सद्रूपगोतिमतिमान्खलुशास्त्रवेत्तामानोपभोगसहितोऽति
निगूढगुह्यः । सत्कुक्षिधर्मनिरतः सुललाटपट्टोधीरोभवेदासितकुंचितकेशपाशः ॥ ८॥ स्वतंत्रः सर्वकार्येषुस्वजनंप्रति
नक्षमी ॥ भुज्यतेविभवस्तस्यानित्यमार्थिजनैः परैः ॥ ९ ॥ भालंतुलायांतुभवेत्सुरत्नैः श्रीकान्यकुब्जाधिपतिर्भवेत्सः ॥ भ
द्रोद्भवः पुत्रकलत्रसौख्योजीवेन्नृपालःशरदामशीतिम् ॥ १० ॥ इतिभद्रः । अथहंसः । रक्तास्योन्नतनासिकः सुचरणोहं
सोप्रसन्नेंद्रियोगौरः पीनकपोलरक्तकरजोहंसस्वनः श्लेष्मलः ॥ शंखाब्जांकुशमत्स्यदामयुगुलैः खट्वांगमालाघटैश्चंच
त्पादकरस्थलोमधुनिभेनेत्रेसुवृत्तंशिरः ॥ ११ ॥ जलाशयप्रीतिरतीवकामीनयातितृप्तिंवनितासुनूनम् ॥ उच्चांगुलैर्वैष
डशीतितुल्यैरायुर्भवेत्षण्णवतिःसमानाम् ॥ १२ ॥ वाल्हीकदेशांतरशूरसेनगांधर्वगंगायमुनांतरालान् ॥ भुक्त्वावनांते
निधनंप्रयातिहंसोयमुक्तोमुनिभिः पुराणैः । १३। इतिहंसः । अथमालव्यः ॥ अस्थूलोष्ठोथविषमवपुर्नैवरिक्तांगसंधिर्मध्ये
क्षामः शशधररुचिर्हस्तिनासः सुगंडः । सद्दीप्ताक्षः समसितरदोजानुदेशाप्तपाणिर्मालव्योयंविलसतिनृपः सप्ततिर्वत्सरा
णाम् ॥ १४ ॥ वक्त्रंत्रयोदशमितांगुलमस्यदीर्घंतिर्यग्दशांगुलमितंश्रवणांतरालम् ॥ मालव्यसंज्ञनृपतिः सभुनक्तिनूनंला
टांश्चमालवकसिंधुसुपारियात्रान् ॥ १५ ॥ इतिमालव्यः ॥ अथशशकः ॥ लघुद्विजास्योद्रुतगः सकोपः शठोतिशूरोविज

नप्रचारः। वनाद्रिदुर्गेषुनदीषुसक्तः प्रियातिथिर्नातिलघुःप्रसिद्धः । १६। नानासेनानिचयनिरतोदंतुरश्चापिकीचेद्वा
तोर्वादेभवतिकुशलश्चंचलः कोलनेत्रः। स्त्रीसंसक्तःपरधनहरोमातृभक्तः सुजंघोमध्येक्षामःसुललितमतीरंध्रवेधीपरेषा
म् । १ । पर्यंकशंखशरशस्त्रमृदंगमालावीणोपमाःखलुकरेचरणेचरेखाः। वर्षाणिसप्ततिमितानिकरोतिराज्यंसम्यक्कृश
शाख्यनृपतिःकथितोमुनींद्रैः। १८। इतिशशकः । केंद्रोच्चगायद्यपिभूसुताद्यामार्तंडशीतांशुयुताभवंति। कुर्वंतिनोर्वी
पतिमात्मपाकेयच्छंतितेकेवलसत्फलानि। १९। इतिजातकाभरणेपंचमहापुरुषलक्षणाध्यायः। अथकारकयोगाध्यायः
मूलत्रिकोणस्वगृहोच्चसंस्थानभश्चराःकेंद्रगतामिथःस्युः। तेकारकाख्याः कथितामुनींद्रैर्विज्ञेयआज्ञाभवनेविशेषः।
॥ १ ॥ प्रालेयरश्मिर्यदिमूर्त्तिवर्त्तीस्वमंदिरस्थोयदितुंगयातः। सूर्यार्किजारामरराजपूज्याः परस्परंकारकसंज्ञकाःस्युः
॥ २॥ शुक्रग्रहेलग्नगतेंबरां १० बु ४ स्थितोग्रहः कारकसंज्ञकःस्यात् ॥ तुंगात्रिकोणस्वगृहांशयातास्तेपीहमानेतपने
विशेषात् ॥ ३ ॥ नीचान्वयेयद्यपिजातजन्मामंत्रीभवेत्कारकखेचरेंद्रैः। राजान्वयेयस्ययदिप्रसूतिर्भूमीपतिस्त्वंसकथं
नयाति ॥ ४ ॥ वेशिस्थितोयस्यशुभोनभोगालग्नेविलग्नेचलवेस्वकीये ॥ केंद्राणिसर्वाणिशुभान्वितानितस्यालयेश्रीः
कुरुतेनिवासम् ॥ ५ ॥ केंद्रस्थितागुरुविलग्नकजन्मनाथामध्येवयस्याततरांवितरंतिभाग्यम् । शीर्षोदयाध्युभयभेषुग

ताभवेयुरारंभमध्यमविरामफलप्रदास्ते ॥ ६ ॥ इतिकारकयोगाध्यायः। अथनाभसयोगः । सर्वैचरस्थाअपिवास्थिर
स्थाद्विदेहसंस्थायदिवाभवंति। क्रमेणरज्जुर्मुसलंनलश्चयोगत्रयस्यादिदमाश्रयाख्यम् ॥ १ ॥ केंद्रत्रयेसौम्यखगै
स्तुमालाखलग्रहैर्व्यालसमाह्वयःस्यात् । इदंतुयोगद्वितयंदलाख्यंपराशरेणप्रतिपादितंहि ॥ २ ॥ आसन्नकेंद्रद्वय
गैर्गदाख्योलग्नास्तसंस्थैःशकटःसमस्तैः ॥ खबंधुयातैर्विहगःप्रदिष्टःशृंगाटकंलग्ननवात्मजस्थैः॥ ३ ॥ धनारिखस्थै
स्त्रिमदायगैर्वाचतुर्थरंध्रव्ययसंस्थितैर्वा । नभस्तलस्थैर्हलनामयोगः किलोदितोयंनिखिलागमज्ञैः ॥ ४ ॥ लग्नस्मर
स्थानगतैःशुभाख्यैःपापैश्चमेषूरणबंधुयातैः ॥ वज्राभिधस्तैर्विपरीतसंस्थैर्यवश्चमिश्रैःकमलाभिधानः ॥ ५ ॥ सूर्या
च्चतुर्थेभवनेसितज्ञौकथंभवेतामितिनैवयुक्तौ ॥ यवाख्यवज्रौत्विदमामनंतितत्रोपपत्तिंपरिदर्शयामि ॥६ ॥ विलग्नपा
र्श्वद्वयवर्तिनीनेज्ञशुक्रजीवान्यतमोविलग्ने। कुजार्कचंद्राःखजलस्मरस्थावज्रंविलोमाच्चवयोनाकिंवा ॥७॥ सर्वैर्नभो
गैर्यदिनाभसाख्योव्यालाख्यमालेत्रिभिरेवखेटैः॥ कथंभवेतामितिचिंतयांतिमुनिप्रणीतंकथमन्यथास्यात् । ८। त्य
क्त्वाकेंद्राणिचेत्खेटाःशेषस्थानेषुसंस्थिताः। वापीयोगोभवेदेवंगदितःपूर्वसूरिभिः। ९ । लग्नाच्चतुर्थात्स्मरतःखमध्या
च्चतुर्ग्रहस्थैर्गगनेचरेंद्रैः। क्रमेणयूपश्चशरश्चशक्तिर्दंडःप्रदिष्टःखलुजातकज्ञैः। १०। लग्नाच्चतुर्थात्स्मरतःखमध्यात्स

प्तर्क्षगैर्नौरथकूटसंज्ञः ॥ छत्रंधनुश्चान्यगृहप्रवृत्तैर्नौपूर्वकैर्योगइहार्धचंद्रः ॥ ११ ॥ तनोर्धनाच्चैकगृहांतरेणस्युःस्थानष
ट्कगगेनेचरेंद्राः ॥ चक्राभिधानश्चसमुद्रनामायोगाइतीहाकृतिजाश्चविंशत् । १२ । येयोगाःकथिताःपुरावहुतरास्तेषाममभा
वेभवेद्वालैश्चैकगतैर्युगंद्विगृहगैःशूलस्त्रिगेहोपगैः ॥ केदारश्चचतुर्षुसर्वखचरैःपाशस्तुपंचास्थितैःषट्स्थैर्दामिनिकाचसप्त
गृहगैर्वीणेतिसंख्याइमे १३ नानाप्रकारैःकिलकालविद्भिर्योगामहद्भिःपरिकीर्तितायें ॥ तत्कर्तृपाकोहिफलंतदीयंबला
नुमानेनविचिंतनीयम् । १४ । चंचद्रूपेणान्विताःक्रौर्यभाजोजातोत्साहाःक्रूरकार्यैर्नितांतम् । रज्जु



योगोत्पन्नमर्त्याःस्वदेशेअन्यास्मिन्वैसंचरंत्यर्थलब्ध्यै । १५ नानामान्यज्ञानधन्योपपन्नःपुत्रैर्ल
क्ष्म्याराजतेराजतेजाःपृथ्वीपालस्याश्रितःस्यात्सहर्षोहर्षोत्कर्षावाप्तिकृन्मौसलेयः । १६ । श
श्वत्पूर्णाःपूर्णरत्नैःस्वगेहाराजस्नेहाःपुण्यदेहाश्चमर्त्याः । कीर्त्यायुक्ताःसर्वदातेसदैवादैवाद्येषांज
न्मकालेनलश्चेत् । १७ पुत्रैर्मित्रैश्चारुभूषाविशेषैर्नानायानैरन्विताःस्तेभवंति । येषांपुंसांसूति
कालेहिमालामालादोलाकामिनीकेलिशीलः । १८ भोक्तान्यस्यान्नस्यरौद्रोदरिद्रोनिद्रोत्साहो
रुट्समुद्रोप्यभद्रः । दुर्दर्पःस्याच्चापकारायसार्पःसर्पःसूतौयस्यमर्त्यस्ययोगः ॥ १९ ॥ नानाशास्त्रानेकमंत्रानुरक्तोगी

तेवाद्येकोविदश्चापियज्वा । रौद्रोद्वेषीद्विषिवर्गैर्वियुक्तोयुक्तोयोषाभूषणाद्यैर्गदायाम् ।२० । दीनोहीनोवैभवेनार्थमि
त्रैर्यस्योत्पत्त्यावाप्तकाश्योप्यवश्यम् । यातिप्रीतिंप्राप्यमर्त्यःकुर्येषांत्यक्त्वायोगेशाकटेयस्यजन्म ।२१ । येषांसूतौ
मानवानांवियोगोभोगोयोयोगोत्पन्नसौख्यंनतेषाम् । यानेप्रीतिर्नित्यमेवप्रवासेवासोऽर्थानामल्पताजल्पतायैः । २२ ।
भूयोत्कर्षः साहसीसंगरेच्छुः सौख्यैर्युक्तोत्यंतबुद्धिर्नरः स्यात् । प्रीतिंगच्छेत्पूर्वपत्न्याःसपत्न्याद्रोहंचैवंशृंगपूर्वेमुखाटे ।
। २३ । प्रेष्योमुक्तःसाधुभिर्मित्रवर्गैःकृष्याजीवीदुःखितोत्यंतभुक्स्यात् । उत्पत्तिंयोलांगलाख्यप्रयातियातिक्लेशंनि
र्धनत्वात्प्रकामम् । २४ । आद्येभागेजीवितस्यांतिमेचसौख्योपेतोभाग्यवान्मानवःस्यात् । मध्येभागेभाग्यहीनः
प्रकामंकामक्रोधैरन्वितोवज्रयोगे । २५ । मध्येभागेधर्मकामार्थसंपत्सौख्यैर्युक्तःस्याद्विनीतोवदान्यः । नित्योत्साहः
सद्व्रतेतुप्रशांतःशांतक्रोधोयःप्रसूतोयवाख्ये ।२६। नित्यंहर्षोत्कर्षशालीबलीयांश्चंचत्कांतिर्गीतकीर्तिर्मनुष्यः । यो
गेसूतिश्चेत्सरोजेसराजाराज्ञोवंशेवाभवेद्दीर्घजीवी । २७ । दीर्घायुःस्यादात्मवंशावतंसःसौख्योपेतोऽत्यंतधीरोमनी
षी । चंचद्वाक्यःसन्मनाःपुष्पवापीवापीयोगेयःप्रसूतःप्रतापी । २८ । धीरोदारोयज्ञकर्मानुसारोनानाविद्यासद्विचारो
नरोवै । यस्योत्पत्तौवर्ततेयूपयोगोयोगोलक्ष्म्याजायतेतस्यनूनम् । २९ । हिंस्रोत्यंतंशिल्पदुःखैःप्रतप्तःप्राप्तानंदः

काननांतेशरज्ञः । मत्योंयेयोगेयःशरेजातजन्माजन्मारंभात्तस्यनक्कापिसौख्यम् । ३० । नीचैरुच्चैःप्रीतिकृत्सालसश्च
सौख्यैरर्थैर्वर्जितोनिर्बलश्च । वादेयुद्धेतस्यबुद्धिर्विशालाशालासौख्यस्याल्पताशक्तियोगे । ३१ । दीनोहीनोन्मत्त
संजातसख्यःप्रेष्यद्वेषीगोत्रजैर्जातवैरः । कांतापुत्रैरर्थमित्रैर्विहीनोहीनोबुद्ध्यादंडयोगाप्तजन्मा । ३२ । ख्यातोलु
ब्धोभोगसौख्यैर्विहीनोयोनौयोगेलब्धजन्मामनुष्यः । क्लेशीशश्वच्चंचलस्वांतवृत्तिर्वृत्तिःस्तेयोद्भूतधान्येनतस्य । ३३ ।
दुर्गारण्यावासशीलश्चमल्लभिल्लप्रीतिर्निर्धनोनिंद्यकर्मा । धर्माधर्मज्ञानहीनश्चकूटःकूटप्राप्तोत्पत्तिरेवंमनुष्यः । ३४ ।
प्राज्ञोराज्ञांकार्यकर्तादयालुःपूर्वंपश्चात्सर्वसौख्यैरुपेतः । यस्योत्पत्तौछत्रयोगोपलब्धिर्लब्धिस्तस्यछत्रसच्चामरादेः
। ३५ । आद्येभागेचांतिमेजीवितस्यसौख्योपेतःकाननाद्रिप्रचारः । योगेजातःकार्मुकेसोऽतिगर्वोगर्वोन्मत्तापत्ति
कृत्कार्मुकास्त्रः । ३६ । भूमीपालप्राप्तचंचत्प्रतिष्ठःश्रेष्ठःसेनाभूषणार्थाम्बराद्यैः । चेदुत्पत्तौयस्ययोगोऽर्द्धचंद्रश्चंद्रःसा
क्षादुत्सवार्थैजनानाम् । ३७ । श्रीमद्रूपोऽत्यंतजातप्रतापोभूयोभूयोपायनैरन्वितःस्यात् । योगेजातःपूरुषोयस्तुचक्रे
चक्रेपृथ्व्याःशालिनीतस्यकीर्तिः । ३८ । दानाधीरश्चारुशीलोदयालुःपृथ्वीपालप्राप्तसौख्यःप्रकामम् । योगेजातोयः
समुद्रेसधन्योधन्योवंशस्तेननूनंनरेण । ३९ । विद्यासत्त्वौदार्यसामर्थ्यहीनानानायासानित्यजातप्रवासाः । येषांयो

गःसंभवेगोलनामानानासत्यप्रीतयोऽनीतयस्ते।।४०॥ पाखंडनाखंडितप्रीतिभाजोनिर्लज्जाः स्युर्धर्मकर्मप्रमुक्ताः। पु
त्रैरर्थैः सर्वथातेवियुक्तायुक्तायुक्तज्ञानशून्याद्युगाख्ये ॥ ४१ ॥ युद्धेवादेतत्पराश्चातिशूराः क्रूराःस्वांतेनिष्ठुरानिर्धनाश्च
योगेयेषांसूतिकालेहिशूलःशूलप्रायास्तेजनानांभवंति ॥ ४२ ॥ सत्योपेताश्चार्थवंतोविनीताः कृष्योत्सुक्याश्चोपका
रादराश्च । योगेकेदारेनरास्तेपिधीराधीराचारश्चापितेषांविशेषात्। ४३। दीनाकारास्तत्पराश्चापकारेबंधेनार्ताभूरि
तल्पाःसदंभाः॥ नानानर्थाःपाशयोगेप्रजाताजातारण्यप्रीतयःस्युर्मनुष्याः । ४४ ।जातानंदानंदनाद्यैःसुधीरोविद्वान्भू
षाकोशंसंजाततोषः। चंचच्छीलोदारबुद्धिप्रशस्तः शस्तःसूतौदामिनीयस्ययोगः। ४५ । अर्थोपेताःशास्त्रपारंगताश्च
संगीतज्ञाः पोषकाः स्युर्बहूनाम् । नानासौख्यैरन्वितास्तुप्रवीणावीणायोगेप्राणिनांजन्मयेषाम् । ४६। प्रोक्तैरेतैर्नाम
साख्यैश्चयोगैः स्यात्सर्वेषांप्राणिनांजन्मकामम् ।तस्मादेतेत्यंतयत्नादपूर्वाः पूर्वाचार्यैर्जातकेसंप्रदिष्टाः ॥ ४७ ॥ एवं
योगानांफलंशालिनीसद्वृत्तैर्व्यक्तंयुक्तियुक्तानिरुक्तम्। तस्मात्प्राज्ञैः सत्कवीनामनूनंसौख्यंचैवंजातकेकोमलोक्त्या।४८।
।इतिश्रीजातकाभरणेनामसयोगाध्यायः॥अथराशिमजातकाध्यायः॥येषांनराणांकिरणाःप्रसूताएकादितःपंचभवेतियाव
त्। तेसर्वथादुःखदारिद्र्यभाजोनीचाप्रियानीचकुलाःखलाश्च ॥१॥ पंचादितःखेंदुमिताश्चयावन्मरीचयस्तेजनयंत्य

वश्यम्। नरान्विदेशाभिरतान्सुदीनान्भाग्येनहीनान्प्रतिपालितांश्च ।२। परंदशभ्यास्तिथयस्तुयावत्तेभानवोमानवमल्पकार्थम् । धर्मप्रियंसंजनयंतिनूनंकुलानुरूपंसुखिनंसुवेषम् ।३। पंचेंदुतोविंशतिरेवयावद्गभस्तयस्तेमनुजंसुशीलम्। कुर्वंतिसत्कीर्तिकरंसुधीरंवंशावतंसंकुशलंकलासु ।४। यस्यप्रसूतौचनखामयूखास्तद्भाग्यरेखासुहृदांसुखाय। पंचाधिकाविंशतिरत्रयावत्तावत्फलाधिक्यमनुक्रमेण ।५। यावत्त्रिंशत्संमिताःपंचवर्गायेषांसूतौचेन्मयूखानराणाम्। भूमीपालप्राप्तसौख्याःप्रधानानानासंपत्संयुतास्तेभवंति ।६। येषांनूनंमानवानांप्रसूतावेकात्रिंशत्संख्यकाश्चेन्मयूखाः। विख्यातास्तेराजतुल्याःप्रधानानानासेनास्वामिनःसंभवंति ।७। प्रसूतिकालेकिरणानराणांद्वित्रिप्रमाणायदिसंभवंति। नानापुराणामथवागिरीणांतेस्वामिनोग्रामशताधिपावा ।८। रामाग्निभिश्चापियुगाग्निभिर्वाकरैर्नरस्यप्रसवोयदिस्यात्॥ क्रमात्सहस्रंत्रिसहस्रकंचग्रामान्सपातीतिवदंतिकेचित् ।९। पंचात्रिसंख्यैःखलुयोमयूखैर्जातोभवेन्मंडलनायकश्च। विलाससत्त्वामलशीलशालीयशोविशेषाधिककोशयुक्तः ।१०। रसाग्निसंख्यैश्चनगाग्निसंख्यैर्जातोमयूखैःखलुयःक्रमेण। ग्रामान्मनुष्यःसतुसार्धलक्षंलक्षत्रयंयातिमहत्प्रतापात् ।११। यस्यप्रसूतौकिरणप्रमाणमष्टत्रिसंख्यंसभवेन्महौजाः। भूमीपतिर्लक्षचतुष्टयंहिग्रामान्प्रशास्तींद्रसमानसंपत् ।१२। नवत्रिसंख्या

जननेमयूखाविख्यातकीर्तिर्नृपतिर्भवेत्सः । प्रौढप्रतापाद्गरुडस्वरूपोगर्वोद्धतारातिभुजंगमेषु । १३ । खाब्धिप्रमाणैः
किरणैःप्रसूतःक्षोणीपतिस्तद्विजयप्रमाणे । भवंतिसेनागजगर्जितानांप्रतिस्वनाःखेघनगर्जितानि । १४ । मयूखजा
लंपरिसूतिकालेयस्यैकवेदाह्वयकंनरस्य । द्व्यंभोधिवेलामलमेखलायाभवेदिलायाःपरिपालकःसः । १५ । यमल
जलधितुल्योवागुणाब्धिप्रमाणोभवतिकिरणयोगश्चेन्नराणांप्रसूतौ । अतुलबलविलासत्रासितारातिवर्गास्त्रिजलधिव
लयायाःपालकास्तेपृथिव्याः । १६ । सूतौवेदयुगप्रमाणकिरणाश्चेत्सार्वभौमःसनायत्सेनाजलधौगलन्मदजलादंतावला
शैलताम् । यांतिच्छत्रविचित्रिताःकमठतांमीनध्वजामीनतांनौकात्वंचरथास्तथायुधरुचिःकल्लोलमालातुलात् । १७ ।
पंचाब्धितश्चेत्परतोभवंतिगभस्तयोजन्मनिमानवानाम् । तेदेवतानामपिदुर्जयाःस्युर्द्वीपांतरोद्गीतयशोविशेषाः १८ ।
॥ इतिजातकाभरणेरश्मिजाताध्यायः ॥ ॥ अथदीप्तादिग्रहफलम् ॥ दीप्तस्तुंगगतःखगोनिजगृहेस्वस्थोहितेहर्षि
तःशांतःशोभनवर्गगश्चखचरःशक्तःस्फुरद्रश्मिभाक् । लुप्तःस्याद्विकलःस्वनीचगृहगोदीनःखलःपापयुक्खेटोयःपरिपी
डितश्चखचरैःसप्रोच्यतेपीडितः । १ । दीप्तेप्रतापादतितापितारिर्गलन्मदालंकृतकुंजरेशः । नरोभवेत्तन्निलयेसलीलंप
द्मालयालंकुरुतेविलासम् । २ । स्वस्थेमहद्वाहनधान्यरत्नविशालशालाबहुलत्वयुक्तः । सेनापतिःस्यान्मनुजोमहौजाः

धर्मकर्मकरणैकमानसोमान वैरिव्रजावाप्तजयाधिशाली।३। हर्षितेभवतिकामिनीजनोऽत्यंतभूषणमणिव्रजावितः। शास्त्राधिकारीसुतरांनरःस्यात्परोप सोद्भवचयोहतशत्रुः।४। शांतेतिशांतोहिमहीपतीनांमंत्रीस्वतंत्रोबहुपुत्रमित्रः। विख्यातकीर्तिःसुजनःप्रसन्नोजनो कारीसुकृतैकचित्तः।५। शक्तेतिशक्तःपुरुषोविशेषात्सुगंधमाल्याभिरुचिःशुचिश्च। खलसखःस्थलसंचालितोनरःकृ पकर्ताऽरिजनप्रहर्ता॥६॥ हतबलोविकलोमलिनःसदारिपुकुलप्रबलश्चगलन्मतिः॥ संत्यक्तनीतिःखलुहीनकांतिःस्व शतरःपरकार्यगतादरः॥७॥दीनेऽतिदीनोपचयेनतप्तःसंप्राप्तभूमीपतिशत्रुभीतिः॥ विदेशयानंधनहीनताचप्रकोप जातिवैरंहिनरःकरोति।८।खलाभिधानेहिखलैःकलिःस्यात्कांतातिचिंतापरितप्तचित्तः। यातिसंचलनतांनिजस्थलाद्व्याकु तालुप्तमतिप्रकाशः।९। पीडितेभवतिपीडितःसदाव्याधिभिर्व्यसनतोपिनितांतम्। अथस्थानादियुक्तग्रहफलानि। परा लत्वंनिजबंधुचिंतया।१०। ॥ इतिश्रीजातकाभरणेदीप्तादिग्रहफलम्॥ आशाबलं विभूतिंजनयत्यवश्यंबलाधिकत्वंमहसःप्रवृद्धिम्। नानाधनंकौशलगौरवादिकुर्याद्दलंस्थानबलोपपन्नः।१। शत्रुक्षयंभूगज यस्यभवेत्प्रकृष्टःखेटःस्वकाष्ठांनियमेननीत्वा। विशिष्टलाभंकुरुतेदशायांपुंसांनिजद्रव्यविमिश्रितंहि।२। आचारशौचशुभस वाजिवृद्धिंशौर्यंचरत्नांबरसंपदंच। लीलाविलासंविमलांचकीर्तिंकुर्याद्ग्रहःकालबलाधिशाली।३।

त्ययुताःसुरूपास्तेजस्विनःकृतविदोद्विजदेवभक्ताः । पुष्पांबरोत्तमविभूषणसादराश्चसौम्यग्रहैर्बलयुतैःपुरुषाभवंति । ४ । लुब्धाःकुकर्मनिरतानिजकार्यनिष्ठाःसाधुद्विषःस्वकुलहाश्चतमोगुणाढ्याः। क्रूरस्वभावनिरतामलिनाःकृतघ्नाः पापग्रहैर्बलयुतैःपुरुषाभवंति । ५ । द्वौवात्रयोवाबलिनोभवंतिफलप्रदानलमितिप्रकल्प्यम् । मंदारसौम्येज्यसितेंदुसूर्याःयथोत्तरंस्युर्बलिनोनिसर्गात् । ६ । क्वचिद्राज्यंक्वचित्पूजांक्वचिद्द्रव्यंक्वचिद्यशः । ददातिखेचरश्चात्रचेष्टवीर्यसमन्वितः । ७ । दुष्टग्रहःसौम्यनिरीक्षितश्चेद्दुष्टंफलंनोसकलंददाति । क्रूरेक्षितःसत्फलदोऽपिचैवंविचारणेयंकिलदृग्बलस्य । ८ । इतिश्रीजातकाभरणेस्थानादियुक्तग्रहफलानि । अथसूर्ययोगाध्यायः । खेचरादिनमणेर्विधुवर्ज्यंद्वादशेचधनभेद्युभयेवा । वोशिवेश्युभयचर्यभिधानाःप्राक्तनैःसमुदिताइतियोगाः । १ । स्यान्मंददृष्टिर्बहुकर्मकर्तापश्यत्यधश्चोन्नतपूर्वकायः । असत्यवादीयदिवोशियोगःप्रसूतिकालेमनुजस्ययस्य । २ । चेत्संभवेयस्यचवेशियोगोभवेद्दयालुःपृथुपूर्वकायः । स्याद्वाग्विलासीलसतासमेतस्तिर्यक्प्रचारःखलुतस्यदृष्टेः । ३ । सर्वंसहःस्थिरतरोऽतितरांसमृद्धःसत्वाधिकःसमशरीरविराजमानः । नात्युच्चकःसरलदृक्प्रबलामलश्रीयुक्तःकिलोभयचरीप्रभवोनरःस्यात् । ४ । सूर्यस्यवीर्यात्खचरानुसाराद्राश्यंशयोगात्प्रविचार्यसर्वम् । न्यूनंसमंवाप्रबलंनराणांफलंसुधीभिःपरिकल्पनीयम् । ५ । इतिसूर्ययोगाध्यायः । अ

थचंद्रयोगाध्यायः॥द्विजपतेर्धनगैःसुनफाभवेद्व्ययगतैरनफाविवर्जितैः॥दुरुधराखचरैरुभयस्थितैर्मुनिवरैरुदितामहदाद
रात् ।१। निशाकराज्जन्मनिखेचरेंद्राधनव्ययस्थानगतानचेत्स्युः । वदंतिकेमद्रुमनामयोगंलक्ष्मीवियोगंकुरुतेसनूनम्
।२।निजभुजार्जितमानसमुन्नतोविशदकीर्तियुतोमतिमान्सुखी।ननुनरःसुनफाप्रभवोभवेन्नरपतेःसचिवःसुकृताकृती३
उदारपूर्तिर्गुणकीर्तिशालीकंदर्पकेलिःशुभवाग्विलासः ॥ सद्वृत्तयुक्तःसततंविनीतःप्रभुर्नरःस्यादनफाभिधाने॥४॥द्र
विणवाहनवाहवसुंधरासुखयुतंसततंकुरुतेनृपम्।दुरुधरातितरांजितवैरिणंसुनयनानयनांचललालसम्।५।विरुद्धवृत्ति
र्मलिनःकुवेषःप्रेष्योमनुष्योहिविदेशवासी ॥ कांतासुहृत्सूनुधनैर्विहीनःकेमद्रुमेभूमिपतेःसुतोपि ॥६॥ केंद्रादिगोमीय
दियामिनीशःस्यात्पद्मिनीनायकतःकरोति ।विज्ञानमानोन्नतिनैपुण्यानिकानिष्ठमध्योत्तमतायुतानि ।७। प्रालेयरश्मिः
परिस्रुतिकालेनिरीक्ष्यमाणःसकलैर्नभोगैः ॥ नरंचिरंजीवितसार्वभौमंकरोतिकेमद्रुममाशुहत्वा॥ ८॥ चतुर्षुकेंद्रेषुभ
वंतिखेटादुष्टोपिकेमद्रुमयोगएषः।विहायकेमद्रुमतांनितांतंकल्पद्रुमःस्यात्किलसत्फलाप्त्यै ॥ ९ ॥ क्षितिसुतयुतजी
वेभूतिकालतुलायांविलसतिनलिनीनांनायकःकन्यकायाम् ॥ विधुरपियदिशेषैर्नेक्षितोमेषवर्तीजनयतिनृपतींद्रंहंतिके
मद्रुमंच। १०। ।इतिजातकाभरणेसुनफानफादियोगाध्यायः। । अथप्रव्रज्याध्यायः। ।येषांसूतौराजयोगा

नराणांप्रव्रज्याचेत्तापसास्तेभवेयुः । वक्ष्येसंक्षेपेणतांस्तापसानांयोगोत्पन्नान्संमतान्प्राक्तनानाम् । १ । ग्रहैश्चतुर्भि
र्यदिपंचभिर्वाषड्भिस्तथैकालयसंस्थितैश्च । नश्यंतिसर्वेखलुराजयोगाःप्रव्राजिकायोगइतिप्रदिष्टः ॥ २ ॥ अन्यग्रहा
लोकनवर्जितश्चेज्जन्मेश्वरोनैवशनिंप्रपश्येत् । मंदोपिनोजन्मपतिंविसत्त्वंदीक्षाविचक्षःप्रचुरोनरःस्यात् । ३ । जन्मा
धिराजोरविजत्रिभागेकुजार्कजांशेर्कजवीक्षितश्च । करोतिजातंकुटिलंकुशीलंपाखंडिकंमंडनतत्परंवा । ४ । होराशीत
करामरेंद्रसाचिवाःसौरेणसंवीक्षिताःपुण्यस्थेसुरमंत्रिणिप्रणयकृत्तीर्थाटनैर्मानवः । कोणेपुण्यग्रहाश्रितेऽध्यखचरैर्नैवेक्षि
तेदीक्षितःस्यान्नूनंतदपिप्रसूतिसमयेसद्राजयोगोद्भवः । ५ । प्राव्राजिकोर्कादिबलक्रमेणवैखानसःखर्परधृक्चलिंगी।
दंडीयतिश्चचक्रधरश्चनग्नस्तत्प्रच्युतोजन्मपतौजितेस्यात् ।६। एकस्थानस्थितैःखेटैःसर्वैश्चबलसंयुतैः । निरंबरानि
राहारायोगमार्गपरायणाः ॥ ७ ॥ एकस्थानेखचराणांचतुर्णांयोगश्चेत्स्यान्मानवानांप्रसूतौ॥ तेस्युर्भूमीपालवंशेपि
जाताःकांतारांतर्वासिनःसर्वथैव । ८ । पंचखेचरपतिर्यदिसूतौभूपतेरपिसुतःसचनित्यम् । कंदमूलफलभक्षणचित्तोत्यं
तशांतिविजितेंद्रियशत्रुः । ९ । एकत्रषण्णांगगनेचराणांप्रसूतिकालेमिलनंयदिस्यात् । तेकेवलंशैलशिलातलेषुतिष्ठं
तिभूपालकुलेषुजाताः । १० । प्रव्राजितानामथभूपतीनांयोगद्वयंचेत्प्रबलंप्रसूतौ । फलंविरुद्धंह्यनुभूयपूर्वंततोव्रजेद्रा

जपदाधिकारम् ॥ ११ ॥ इतिश्रीजातकाभरणेप्रव्रज्यायोगाः ॥ ॥ अथारिष्टाध्यायः ॥ रिष्टाध्यायाधीनमायुर्न
राणांयस्मात्तस्माद्रिष्टमात्रंप्रवच्मि ॥ यस्याभावेसाधितायुःप्रमाणेप्रामाण्यंस्यात्संभवेसर्वथैव ॥ १ ॥ भौमालयेकीरश
नींदुदृष्टेगृहेष्टमेचित्राशिखंडिसूनुः ॥ अदृष्टमूर्तिर्भृगुणात्रयोगेप्राणैर्वियोगंलभतेमनुष्यः । २ ॥ षष्ठेष्टमेवापिचतुष्टयेवा
विलोमगामीकुजमंदिरस्थः ॥ बलान्वितेनावनिजेनदृष्टोवर्षैस्त्रिभीरिष्टकरःशनिःस्यात् ॥ ३ ॥ चंद्रार्कयुक्जन्मनिभानु
सूनुःकरोतिनूनंनिधनंनवाब्दैः ॥ मासेनमंदावनिसूनुसूर्याश्छिद्रेरिगेहाश्रिततासमेताः ।४। एकोऽपिपापोष्टमगोरिगेहे
पापेक्षितोब्देनशिशुंनिहन्यात् । सुधारसोयद्यपियेनपीतःकिमत्रचित्रंनहियेनपीतः । ५ । सूर्येंदुगेहेदनुजेंद्रमंत्रीव्ययाष्ट
मारिस्थितसौम्यखेटैः । सर्वैःप्रदृष्टःखलुषड्भिरब्दैर्जातस्यजंतोर्वितनोतिरिष्टम् । ६ । सोमस्यसूनुर्यदिकर्कटस्थःषष्ठ
ऽष्टमेवाभवनेविलग्नात् । चंद्रेणदृष्टोऽब्दचतुष्टयेनजातस्यजंतोःप्रकरोतिरिष्टम् । ७ । केतूदयाभेप्रभवेच्चयास्मिन्त
स्मिन्प्रसूतिर्यदियस्यजंतोः । स्यात्तस्यमासाद्वितयेननाशोविनिश्चयेनेतिवदंतिपूर्वे । ८ । मेषूरणेकोधरणीसुतस्यगे
हेथवाकात्मजधामसंस्थः । पापैरनेकैश्चनिरीक्ष्यमाणःप्राणैर्वियोगंसतुयातितूर्णम् । ९ । लग्नेभवंतिदृक्काणाःशृंख
लापाशपक्षिणाम् । सपापामरणंकुर्युःसप्तवर्षैर्नसंशयः । १० । राहुर्भवज्जन्मनिकेंद्रवर्ती क्रूरग्रहैश्चापिनिरीक्षितश्चेत्

। करोतिवर्षैर्दशभिर्विनाशंवदंतिवाषोडशभिश्चकेचित् ।११। षष्ठाष्टमस्थाःशुभखेचरेंद्राःपापास्त्रिकोणेयदिजन्मल
ग्नात् । क्रूरेक्षितास्तेनिधनंविदध्युर्वर्षाष्टकेनैवखलप्रदृष्टाः । १२। सूतिकालेभवेच्चंद्रःषष्ठोवाष्टमसंस्थितः । बालस्यकु
रुतेसद्योमृत्युंपापावलोकितः ।१३। शुभाशुभालोकनतुल्यतायांवर्षैश्चतुर्भिर्निधनंतदानीम् । न्यूनाधिकत्वेसुधिया
विधेयस्त्रैराशिकेनैवविनिश्चयोयम् ।१४। धनांत्यगैर्वाऽरिमृतिस्थितैर्वाधर्माष्टमस्थैर्व्ययशत्रुगैर्वा । क्रूरग्रहैर्योजननं
प्रपन्नःषष्ठेऽष्टमेमासिमृतिंप्रयाति । १५। षष्ठाष्टमस्थाःशुभखेचरेंद्राविलोमगैःपापखगैःप्रदृष्टाः । शुभैरदृष्टायदिते
भवंतिमासेननूनंनिधनंतदानीम् ।१६। विलग्नजन्माधिपतीभवेतामस्तंगतावष्टरिपुव्ययस्थौ । जातस्यजंतोर्मरण
प्रदौतौ वदंतिराशिप्रमितैर्हिवर्षैः । १७। होराधिपःपापखगैःप्रदृष्टश्चतुर्थमासेमृतिकृन्मृतिस्थः । जन्मेश्वरस्तन्निधने
दिनेशःशुक्रेक्षितोऽब्दैर्भवनप्रमाणैः । १८ ।होराधिपःपापयुतःस्मरस्थःकरोतिनाशंखलुजीवितस्य । मासेनजन्माधिप
तिस्तुतद्वत्पापान्वितोरंध्रगृहाश्रितश्च।१९। युक्तोभवेदारदिवाकराभ्यांनिशाकरश्चारखगैर्नदृष्टः स्वसूनुगेहोपगतोवि
नाशंकरोतिवर्षैर्नवमेऽर्भकस्य । २०। लग्नास्तरंध्रांत्यगतेशशांकेपापान्वितेसौम्यखगैरदृष्टे । केंद्रेषुसौम्यग्रहवर्जिते
षुकीनाशदेशंहिशिशुःप्रयाति । २१। रंध्रालयेवाथचतुष्टयेषुखलग्रहाणांमिलनंयदिस्यात् । कलानिधौक्षीणकलाक

लापेलग्नस्थितेनश्यतियःप्रसूतः ।२२। लग्नेकुलीरेप्यथवालिसंज्ञेखलग्रहाःपूर्वदलेयदिस्युः । सौम्यःपरार्धेखलु
वज्रमुष्टियोगोयमुक्तःप्रकरोतिरिष्टम् ।२३। व्ययारिरंध्रेषुशुभाभिधानास्त्रिकोणकेंद्रेषुभवंतिपापाः । सरोजबंधोरुद
येप्रसूतिर्यस्यान्यलोकंत्वरयासयाति ।२४। सौरस्यालयसंस्थोदेवगुरुर्निधनभावगोलग्नात् । पापग्रहदृष्टतनुर्निधना
यैकादशोहितुल्यःस्यात् ।२५। रंध्रांबुजायाभवनेषुखेटाविधौचपापद्वयमध्ययाते । यस्यप्रसूतिःसतुयातिकामंयमस्य
धामप्रवदंतिपूर्वे ।२६। संध्याद्वयेभांत्यगताश्चपापाश्चंद्रस्यहोरायदिजन्मकाले । चतुर्षुकेंद्रेषुशशांकपापाःसयातिबा
लःकिलकालगेहम् ।२७। स्मराष्टमस्थायदिपापखेटाःपापेक्षिताःसाधुखगैर्नदृष्टाः । करोतिरिष्टंत्वरयार्भकस्यसाकं
जनन्याभिमतंबहूनाम् ।२८। निजोपरागेत्वशुभान्वितेंदुर्लग्नस्थितोभूमिसुतोष्टमस्थः। ततोजनन्यासहबालकस्यमृत्यु
स्तथार्केसातिशस्त्रघातः। २९। भूमीसुतेवार्कसुतेविलग्नेभानौस्मरस्थानगतेन्यथावा । युक्तेतयोरन्यतमेनचंद्रेचिरेण
मृत्युःपरिवेदितव्यः। ३०। पापैर्विलग्नाष्टमधामसंस्थैःक्षीणेविधौद्वादशभावयाते । केंद्रेषुसौम्यानभवंतिनूनंशिशोस्त
दानींनिधनंप्रकल्प्यम् ।३१। त्रिकोणकेंद्रेषुभवंतिपापाःशुभग्रहालोकनवर्जिताश्चेत् ।लग्नोपयातेसतिभास्करेवानि
शाकरेरिष्टसमुद्गमःस्यात् । ३२। भानुभानुतनयोशनसःस्युश्चेत्प्रसूतिसमयेखलयुक्ताः। यद्यपींद्रगुरुणापरिदृष्टारिष्ट

दास्तनुभृतांनवमेब्दे।३३कामिनीभवनगस्तुहिमांशुर्लग्नगोमृतपतिःशनिदृष्टः।रिष्टदोनवसमाभिरीडितोजातकज्ञमुनि
भिःपुरातनैः।३४।दृष्टेरिष्टेनामदृष्टेस्यकालेप्रालेयांशौस्वालयंवाविलग्नम्।वीर्योपेतंसंगतेपापदृष्टेशत्तयायुक्तेमृत्युका
लोब्दमध्ये।३५।लग्नात्त्रिकोणांतिमसप्तरंध्रेचंद्रेसपापोपचयंप्रयाते।शुभैर्नयुक्तेयदिनप्रदृष्टेरिष्टंभवेदत्रकिमत्रचित्र
म्।३६।सूर्यज्ञजीवाःशनिशुक्रभौमाःसूर्यारमंदाश्चयदींदुयुक्ताः।प्रसूतिकालेमिलितायदिस्युर्नाशःशिशोरब्दकपंच
केन।३७। विलग्ननाथोभवनप्रमाणैर्वर्षैर्विनाशंकुरुतेरिपुस्थः। मासैर्दृकाणाधिपतिर्लवेशोदिनैर्मुनींद्राःप्रवदंतिस
र्वे।३८।लग्नेशनिःक्रूरनिरीक्षितश्चेच्छिशोर्विनाशंखलुषोडशाहात्।करोतिमासेनचपापयुक्तःपापैर्वियुक्तःखलुवत्स
रेण।३९।रवींदुयुक्पापनिरीक्षितोज्ञश्चैकादशाब्दैःकुरुतेविनाशम्।लग्नेर्कमंदावनिजाःकृशेंदुःस्मरेषडब्दैरथसप्तभि
र्वा।४०।कृशःशशांकःस्मरगोविलग्नेमंदारशुक्रागुरुदृष्टिहीनाः।विनाशनंतेब्दकसप्तकेनकुर्वंतिजातस्यविनिश्चये
न।४१।चंद्रःसचांद्रिर्यदिकेंद्रसंस्थःसूर्यांशुलुप्तःकुजमंददृष्टः।वर्षद्वयेनप्रकरोतिरिष्टंस्पष्टंवसिष्ठादयएवमूचुः।४२।
निशापतिर्लग्नपतेःसकाशाच्चेदष्टमस्थःकृशतांप्रयातः।क्रूरैश्चदृष्टश्चशुभैर्नदृष्टोवर्षद्वयांतेसकरोतिरिष्टम्।४३।लग्ना
धिपःपापखगोनवांशेचंद्रस्यचद्वादशगःशशांकात्।पापेक्षितोमारयतिप्रसूतौशिशुंनवाब्दैःखलुकीर्तयंति।४४।लग्ने

श्वरःसूर्यमयूखलुप्तोऽष्टमेश्वरेणप्रविलोक्यमानः ॥ रिष्टंकरोराशिसमानवर्षैःप्राज्ञैरुदाहारिनरस्यजन्म ॥ ४५ ॥ अदृ
श्यभागेयदिपापखेटादृश्येविभागेशुभदाभवंति ॥ स्वर्भानुनामातनुभावगामीजीवेत्प्रसूतोऽब्दकसप्तकंहि । ४६ । सिं
हीसुतःसप्तमभावसंस्थःशनैश्चरादित्यनिरीक्षितश्चेत् । नालोकितःसौम्यखगैस्तुजीवेद्वर्षाणिहिद्वादशयःप्रसूतः ॥ ४७ ॥
सिंहालिकुंभस्थितसैंहिकेयोविलोकितःक्रूरखगैर्यदिस्यात् ॥ वर्षाणिसप्तैवतदीयमायुःप्रकीर्तितंजातकशास्त्रविद्भिः ४८
केतूदयःस्यात्प्रथमंततश्चेन्निर्घातवाताशनयोभवंति ॥ योरौद्रसार्पाख्यमुहूर्तजन्माप्राप्नोतिकामंयममंदिरंसः । ४९ । चंद्रं
क्रूरयुतंक्षीणंपश्येद्राहुर्यदातदा ॥ दिनैःस्वल्पतरैर्बालःकालस्यालयमाव्रजेत् । ५० । मातंगै ८ र्नवाभिश्च ९ रामनयनै २३ र्नेत्रा
श्विभिः २२ सायकैः ५ रेकेनाब्धिभि ४ स्त्रिलोचनमितै २३ र्धृत्या १८ चविंश २० न्मितैः । भूनेत्रै २१ र्दशभि १० र्लवैर्यदिभवेन्मे
षादिसंस्थोविधुर्वर्षैर्भागसमैःकरोतिनिधनंकालोऽयमत्रोदितः ॥ ५१ ॥ ॥ इतिश्रीजातकाभरणेरिष्टाध्यायः ॥ ॥ अथचंद्रारि
ष्टभंगाध्यायः । होरागमज्ञैर्बहुविस्तरेणरिष्टस्ययोगायदपिप्रदिष्टाः । तेरिष्टभंगंयदिनोसमर्थाः सारिष्टभंगोऽप्यभिधीयते
ततः । १ । पूर्णैः करैरवनीपतिर्दिविचरैः सर्वैः प्रदृष्टस्तदारिष्टंहंत्यथवासुहृद्भवनगतः सद्वीक्षितोऽतिप्रभः । क्षीणोवापि नजो
च्चगःशुभखगैःशुक्रेणच प्रेक्षितोरिष्टंयःसमुपागतंसतुहरेत्सिंहोयथासिंधुरम् । २ । रिष्टंनिहन्युःशुभदाःशशांकात्पापैर्वि

नास्तेष्टमशत्रुसंस्थाः। शुभान्वितःसाधुदृकाणवर्तीपीयूषमूर्तिःशमयेत्सारिष्टम्। ३ । शुभग्रहद्वादशभावसंस्थःपूर्णःशशी
रिष्टहरःप्रदिष्टः। लग्नेशदृष्टःशुभराशियातोनान्येक्षितारक्षतिरिष्टयोगात्। ४। वलक्षपक्षेयदिजन्मरात्रौकृष्णेदिवाष्टारिग
तोपिचंद्रः। क्रमेणदृष्टःशुभपापखेटैःपितेवबालंपरिपालयेत्सः। ५। संस्थःशशीक्रूरखगस्यराशौराशीश्वरेणापिविलोकित
श्च। तद्वर्गगोवायदितेनयुक्तःकुर्यादलंमंगलमेवनान्यत्। ६। जन्माधिपालोबलवान्किलस्यात्सौम्यैःसुहृद्भिश्चनिरीक्ष्य
माणः। यद्वातनुस्थःसकलैःप्रदृष्टोरिष्टंहिचंद्रेणकृतंनिहंति। ७। स्वोच्चेस्वभेवायदिवात्मवर्गेस्थितोहितानांचसतांप्रदृष्टः।
शुभैर्नपापारियुतेक्षितश्चारिष्टंहरेत्पूर्णकलःकलावान्। ८। वाचामधीशोदशमेशशांकाद्ययज्ञशुक्रौचखलाःकिलाये। वि
लग्नपारुर्व्यबुदशात्यलाभेशुभेक्षितेंदुश्चहरेत्सारिष्टम्। ९। प्रसूतिकालेयदिजन्मपालःकिलेक्षितोनिर्मलखेचरैश्च। बलाधि
शालीप्रलयंकरोतिरिष्टस्यशीतांशुसमुद्भवश्च। १०। भवेन्निशाजन्मनिपद्मिनीशःपरोच्चगामीनिजवेश्मगोवा। तदंशगो
वापिशुभेक्षितश्चपूर्णःशशांकोनिधनंनिहंति। ११। दास्त्रेग्निभेवागुरुभेशशांकेवर्गोत्तमेपूर्णकलाकलापे। त्रिपुष्करेशीतक
रेहिरिष्टंप्रकृष्टमप्याशुलयंप्रयाति। १२। पादेद्वितीयेयदिवातृतीयेपुष्यस्यताराधिपतिर्यदिस्यात्। वारोहिणीनांचरणे
द्वितीयेसौम्याक्षितोरक्षतिमृत्युदोषात्। १३। कुलीरमेषगश्चंद्रःकेंद्रस्थःशुभवीक्षितः। ग्रस्तोपिरिष्टभंगायभवेदत्रनसं

शयः ।१४। केंद्रेषुचेदंबरमार्गगानांद्वयंद्वयंसौम्यखगेविलग्ने।क्षीणोपिचंद्रःस्मरभावसंस्थःसंप्राप्तरिष्टंशमयेदवश्यम्
।१५। इतिचंद्रारिष्टभंगाध्यायः। अथसर्वग्रहारिष्टभंगाध्यायः । । मरीचिमालामलकांतिशालीप्रसूतिकालेप्रबलोयादि
स्यात्। बृहस्पतिर्मूर्तिगतोनिहंतिरिष्टानिनूनंमुनयोवदंति। १ । पापैरवीर्यैश्चशुभैःसवीर्यैःशुभस्यराशौतनुभावयाते
निरीक्षितेव्योमरचैःशुभाख्यैःसंक्षीयतेरिष्टमुपागतंवै। २ । सौम्यवर्गाश्रिताःपापाःसौम्यवर्गाश्रितैःशुभैः। दृष्टाअ
पिप्रकृष्टंतेरिष्टंनाशयितुंक्षमाः। ३ । मूर्तेस्तुराहुस्त्रिषडायवर्तीरिष्टंहरत्येवशुभैःप्रदृष्टः। शिर्षोदयस्थैर्विकृतिंनयातैः
समस्तखेटैःखलुरिष्टभंगः।४। प्रसूतिकालेविजयाधिशालीशुभोहरेद्रिष्टमपापदृष्टः। कश्चिद्ग्रहश्चेत्परिवेषगामीक्रू
रैःप्रदृष्टःसतुरिष्टभंक्ता। ५ । रजोविहीनंगगनंचरस्थाःस्वस्थाभवेयुर्जलदाःसुनीलाः। मंदानिलाश्चेद्विमलामुहूर्ताः
प्रसूतिकालेकिलरिष्टभंगाः।६। कुंभयोनेर्मुनीनांचेदुद्गमेजननंभवेत्। विलीयतेतदारिष्टंनूनंलाक्षेववह्निना। ७।
वृषाजकर्काख्यविलग्नसंस्थोराहुर्भवेद्रिष्टविनाशकर्त्ता। शुभाश्चयोगाबहवोयदिस्युस्तथापिरिष्टंविलयंप्रयाति। ८।
नक्रत्रयेलाभरिपुत्रिसंस्थःकेतुस्तुहेतुर्निधनोपशांत्यै। परस्परंभार्गवजीवसौम्यास्त्रिकोणगास्तेपिहरंत्यरिष्टम्। ९।
संध्याभवावैधृतिपातभद्रागंडांतयुक्ताअपिजन्मकाले। भवंतिरिष्टस्यविनाशनार्थैनिरंतराद्दृश्यदलेथसर्वे। १०। त्र्या

यारितुंगेषुगतःपतंगोनोपद्रुतोरिष्टविनाशकर्त्ता ॥ एकर्क्षगाःषट्त्रिदशायसंस्थाःसर्वोपरिष्टंशमयंतिखेटाः॥ ११ ॥ शी
तभानोस्तनोर्वापिद्वौत्रयोवाप्यनेकशः॥ एकांतस्थास्तदारिष्टभंगोभवतिनिश्चितम् । १२। पातालयातःप्रबलेंदुदृष्टो
निजालयस्थोयदिजन्मकाले ॥ देवेंद्रमंत्रीदलयत्यवश्यममंगलंरिष्टमवेक्षणेन । १३ । लग्नस्थितस्यखेटस्यव्ययेवि
त्तेत्रयस्त्रयः । तत्कालमुद्भवाःखेटारिष्टदारणकारिणः । १४ । केंद्रेष्वापोक्लिमेष्वेवयद्वापणफरेषुच । शुभांशस्थाग्रहाः
सर्वेरिष्टभंगकराःस्मृताः॥ १५ ॥ अन्योन्यंहिचतुर्थस्थायुग्मभावमुपागताः॥ स्वभानुसंयुताःखेटारिष्टदोषापहारकाः॥
।१६।चतुष्टयेश्रेष्ठबलाधिशालीशुभोनभागोऽष्टमगोकनकश्चित्॥त्रिंशन्मितायुःप्रकरोतिनूनंदशान्वितंतच्छुभखेटदृ
ष्टः।१७।निजत्रिभागेस्वगृहेगुरुश्चेदायुर्मितिःस्यात्खलुसप्तविंशत् । बृहस्पतिस्तुंगगतोविलग्नेभृगोःसुतःकेंद्रग
तःशतायुः। १८।लग्नेस्वतुंगेबलशालिनींदौसौम्याःस्वभस्थाःखलुषष्टिरायुः। मूलत्रिकोणेषुशुभेषुतुंगेलग्नेगुरावायुर
शीतिरेव।१९ ।लग्नाष्टमारींदुयुतानचेत्स्युःक्रूराःस्वभस्थायदिखेचरौद्वौ। बलान्वितावंबरगौभवेतांजातःशतायुःकथि
तोमुनींद्रैः।२०।शून्येरंध्रेकेंद्रगैःसौम्यखेटैर्लग्नेजीवेनैधनेंदूदयश्चेत्। नोसंदृष्टाःपापखेटैस्तदास्यादायुर्मानंसप्ततिर्वत्स
राणाम्।२१। इति जातकाभरणेसर्वग्रहरिष्टभंगाध्यायः। अथसदसद्दशाविचारणा ।राजयोगगृहभावसंभवंरिष्टयोग



त ६

जानितंचयत्फलम्। तद्दशाफलगतंयतोभवेत्तेनतत्फलमलंब्रुवेधुना ।१। सर्वदेववरदोवरदोवःशारदापिवरदावदनाब्जे ।
इंदिराचखलुमंदिरसंस्थाप्रस्थिताजलनिधीन्प्रतिकीर्तिः ।२। स्वोच्चेस्वगेहेयदिवात्रिकोणेवर्गेस्वकीयेथचतुष्टयेवा । ना
स्तंगतोनोशुभदृष्टियुक्तोजन्माधिपःस्याच्छुभदःस्वपाके ।३। त्रिषष्ठलाभेषुगतैःसमस्तैःसौम्यैःसुखार्थाश्चभवंतिबाल्ये ।
तत्रैवपापैर्वयसोंत्यभागेजायार्थपुत्रादिसुखानिसम्यक् ।४। तुंगेस्वगेहेस्वसुहृद्ग्रहांशेनीचारिभस्थेपिचखेचरेंद्रे ।मिश्रंफ
लंस्यात्खलुतस्यपाकेहोरागमज्ञैःपरिकल्पनीयम् । ५ ।वाचांपतिर्लग्नपतिःस्वतुंगेस्वर्क्षेदशायात्रिगतश्चसूतौ । करोतिरा
ज्यंस्वकुलानुमानान्नानाविधोत्कर्षविशेषयुक्तम् । ६ । आरोहिणीदशायस्यखेचरःसत्फलप्रदः । सत्फलापचयंकुर्याद्द
शाचेदवरोहिणी ।७। स्त्रीमित्रपुत्रद्रविणोपलब्धिकर्कोहिमांशुःकुरुतेदशायाम् । जायापशूनांहननेप्रवृत्तिंकरोतिपृ
थ्वीतनुजस्यगेहे ।८। सच्छात्रमित्राधिगमंकरोतिबुधस्यराशौगुरुधामसंस्थः । नृपप्रसादंविपुलांचलक्ष्मींशुक्रस्यगे
हेफलमेतदेव ।९। तुषाररश्मिःशनिवेश्मसंस्थःप्रेष्यंमनुष्यंकुरुतेदशायाम् । अरण्यदुर्गस्थितिमाददातिप्रीतिंमरुद्गे
गृहनिर्मितौच ।१०। मित्रोच्चोपचयस्थानेत्रिकोणेसप्तमेपिवा । पाकेश्वरात्स्थितश्चंद्रःकुरुतेसत्फलांदशाम् । इति
जातकाभरणेसदसद्दशाविचारणा । अथरविदशाफलविचारणालिख्यते । भानोर्दशायांहिविदेशवासोभवेत्कदाचिन्न

नुमानवानाम् । भूवह्निभूपद्विजवर्यशस्त्रभैषज्यतोऽतीवधनागमःस्यात् ।१। मंत्राभिचारैरभिरुचिर्विचित्राधात्रीपतेः
सख्यविधिर्विशेषात् । विख्यातकर्माभिरतिर्मतिःस्यादनल्पजलपेचरणेनचिंता ।२। व्ययश्चदंतोदरनेत्रबाधाकांता
सुताभ्यांवियुतिश्चचिंता । नृपाग्निचोराहितबंधुवर्गैःस्वगोत्रजैर्वाप्रबलःकलिःस्यात् । ३ । सामान्यफलमेतत् । अथ
विशेषफलमुच्यते । दशादिनेशस्यनिजोच्चगस्यस्वधर्मकर्माभिरुचिंकरोति । तातार्जितद्रव्यगृहादिलाभंनानासुखानि
प्रमदासुतेभ्यः ।४। उच्चच्युतस्यातितरामरिष्टंकष्टंचरोगान्स्वजनैर्विरोधम् । रवेर्दशातीवचतुष्पदानांकरोतिहानिंन
नुमानवानाम् । ५ । कांतासुतानांकृषिवाहनानांप्रपीडनंस्यान्नयनाननेषु । हृद्रोगबाधाबहुधानराणांवृषाधिरूढस्य
रवेर्दशायाम् ।६। स्यान्मंत्रशास्त्रोत्तमकाव्यकर्ताप्रीतिःपुराणेचभवेन्नराणाम् । कृषिक्रियाधान्यधनैःसुखानिनृयुग्मसं
स्थस्यरवेर्दशायाम् ।७। ख्यातिर्नृपप्रीतिरतीवनित्यंस्त्रीनिर्जितत्वंचमहत्प्रकोपः । सुहृज्जनेनूनमनूनपीडाकर्काधि
रूढस्यरवेर्दशायाम् । ८ । दुर्गादरण्याच्चकृषिक्रियायांधनान्यनेकानिभवंतिनूनम् । स्यात्ख्यातिरुच्चैर्नृपगौरवंचकं
ठीरवस्थार्कदशाप्रवेशे ।९। स्यात्कन्यकानांजननंचमानोदेवद्विजानामनुपूजनंच । लब्धिःपशूनांचभवेद्दशायांकं
न्यागतस्यांबुजबांधवस्य १०क्षेत्रात्मजार्थप्रमदासुपीडाचोराग्निभीतिश्चविदेशयानम् । नीचत्वमुच्चैःखलुमानवानांतु

लाधरस्थस्यरवेर्दशायाम् । ११ । नीचांशमुक्तस्यरवेर्दशायांसुखेनलाभःपरवंचनंच । जायानिमित्तोद्यतदुःखलब्धिनीं
चैर्भवेत्सरूयाविधिर्नितांतम् । १२ । नीचाष्टमस्थस्यरवेर्दशायामुद्विग्नतादोषसमुद्भवःस्यात् । षष्ठाश्रितस्यव्रणजन्यपी
डापित्रोश्चबाधाबहुधाऽवगम्या । १३ । तेजोविशेषाभियुतोनितांतंविषाग्निशस्त्रैःपरिपीडितश्च । पित्राजनन्यागतचित्त
शुद्धिःस्याद्वृश्चिकस्थस्यरवेर्दशायाम् । १४ । कलत्रपुत्रद्रविणादिसौख्यंस्याद्गौरवंराजकुलाद्द्विजेभ्यः । संगीतशास्त्रा
गमसौख्यमुच्चैश्चापोपयातस्यरवेर्दशायाम् । १५ । जायात्मजद्रव्यसुखाल्पतास्यादनल्पपीडामयतोनितांतम् । भवे
त्पराधीनतयातिचिंतानक्रोपयातस्यरवेर्दशायाम् । १५ । हृद्रोगबाधासुतवित्तकांताचिंतापरान्नादिसुखंनकिंचित् ॥
शत्रूद्गमश्चाप्यतिदीनतास्याद्घटाधिरूढस्यरवेर्दशायाम् । १७ । स्त्रीवित्तसौख्योपचयःप्रतिष्ठाज्वरादिपीडाचसुता
दिकानाम् । वृथाटनत्वंननुमानवानांमीनेदिनेशस्यदशाप्रवेशे । १८ । स्वोच्चस्थितस्याष्टमभावगस्यदशादिनेशस्य
चदोषदास्यात् । षष्ठास्थितस्यव्रणजातपीडांकरोतिबाधांचपितुर्जनन्याः । १९ । पूर्वंभवेत्सूर्यदशाप्रवेशःपित्रोश्चबाधा
विविधातदानीम् । लग्नाद्दशाक्लेशविशेषदात्रीनक्षत्रनाथस्यदशातिशस्ता । २० । इतिसूर्यदशाफलविचारः । अथ
चंद्रदशाफलानि । आरोहिणीचंद्रदशानराणांसर्वार्थसिद्ध्यैकथिताविशेषात् । तथावरोहाकुरुतेविलंबंसर्वेषुकार्येषुचबुद्धि

मांद्यम् । १ । नक्षत्रनाथस्यदशाप्रवेशेभवेन्नराणांमहतीप्रतिष्ठा । मन्त्रित्वमुच्चैर्नृपतेःप्रसादोभूदेवदेवार्चनताप्रवृद्धिः
।२। सन्मंत्रविद्याविविधाधनाप्तिर्नानाकलाकौशलशालिताच । गंधैस्तिलैश्चापिफलैःप्रसूनैर्वृक्षैरलंवाद्रविणोपलब्धिः
।।३। ख्यातिःसुकीर्त्तिर्विनयाधिकत्वंपरोपकारायमतिर्यशश्च । इतस्ततःसंचलनाप्रियत्वंकन्याप्रजासंजननंमृदुत्वम् ।४
जलस्यकर्मण्यतिसादरत्वमालस्यनिद्राकुलताक्षमाच । कृष्यादिकर्माभिशुचिःस्थिरत्वंकफानिलाधिक्यमतीवसत्त्वम्
। ५ । भवेद्विरोधःस्वजनेननूनंकलिप्रसंगोबहुजल्पताच । चित्तस्थितिर्नैवचसाधुकार्येसामान्यतःकीर्तितमेतदत्र । ६ ।
मेषेशशांकस्यदशाप्रवेशेयोषात्मजानंदभरोजनानाम् । विदेशकर्माभिरतिर्व्ययःस्यात्क्रौर्यंशिरोरुक्सहजारिबाधा ।७।
उच्चाधिरूढस्यदशाजडांशोःकुलानुसारंहिददातिराज्यम् । योषाविभूषात्मजगोतुरंगगजाप्तिसौख्योपचयंजयंच ।८।
मूलत्रिकोणाश्रितशीतरश्मेर्दशाविदेशाभिगमंकरोति । कृषेःक्रयाद्विक्रयतोधनाप्तिंकफानिलार्तिस्वजनैर्विरोधम् । ९
वृषस्यपूर्वार्द्धगतोहिमांशुःपापान्वितःसंजनयेज्जनन्याः । मृत्युंपरार्द्धेजनकस्यसौम्यसंगंक्षणान्मृत्युसमानरोगम् । १० ।
द्वंद्वाधिसंस्थेंदुदशाप्रवेशेदेवद्विजार्चाधनभोगसंस्थम् । स्थलांतरेसंचलनंकिलस्यात्सुखेनसम्यङ्मतिवैभवंच । ११ ॥
कुलीरसंस्थस्यकलानिधेःस्यात्पाकेपशुद्रव्यकृषिप्रवृद्धिः । कलाकलापाकलनंचशैलेवनेरुचिर्गुह्यगदप्रकोपः । १२ ।

कंठीरवस्थस्य निशाकरस्य पाके नरोऽर्थं लभते च नित्यं। श्रेष्ठां प्रतिष्ठां विकलत्वमंगेऽनंगोपहीनत्वमनुप्रयाति। १३। कन्या
श्रितेंदोश्च दशाप्रवेशे विदेशयानं वनितोपलब्धिः। कलाकलापामलबुद्धिवृद्धिः स्वल्पार्थसिद्धिश्च भवेन्नराणाम्। १४।
कलानिधेस्तौलिगतस्य पाके लोलं मनः स्याद्वनिताविषादः। वादश्च कौश्चिद्धनहीनता च प्रोत्साहभंगः खलु नीचसंगः। १५।
नीचोपयातस्य विधोर्दशायां स्याद्व्याधिवृद्धिर्बहुधा नराणाम्। वियोजनं वै स्वजनेन नूनं मानाल्पताऽनल्पविकल्पचिंता। १६।
विमुक्तनीचोडुपतेर्दशायां भवेदवाप्तिः क्रयविक्रयाभ्याम्। धर्मोऽन्यथा धर्मविधानमल्पमल्पं च सख्यं जनमित्रवर्गैः। १७।
चापोपयातस्य च शीतरश्मेर्दशाप्रवेशे गजवाजिवृद्धिः। पूर्वार्जितार्थोपहतिर्नितांतमन्यत्र सौभाग्यसुखानि नूनम्। १८।
हिमकरस्य दशा मकरस्थितः सुतसुखानि धनागमनानि च। वितनुते तनुतामनिलात्तनोरनुदिनं गमनागमनानि वै। १९।
क्रीडा च पीडाव्यसनानि नूनं स्युर्मानवानां तनुता शरीरे। ऋणोपलब्धिश्चलता नितांतं दशाप्रवेशे कलशास्थितेंदोः। २०।
वर्गोत्तमस्थस्य घटे हिमांशोर्दशाप्रवेशे बलिभिर्विरोधः। कलत्रमित्रद्रविणात्मजाद्यैर्भवेद्वियोगो दशनास्यपीडा। २१।
मीनोपयातस्य च शीतभानोर्दशाप्रवेशे हि जलोद्भवार्थः। कलत्रपुत्रादिसुखादि नूनं शत्रुक्षयो बुद्धिविवृद्धिरुच्चैः। २२
वर्गोत्तमस्थस्य झषे हिमांशोर्दशाप्रवेशे महिषीगजाश्वान्। पुत्रादितोषं रिपुनाशमुच्चैर्लभेन्मनुष्यो हि यशोमनीषाम्। २३।

दशाप्रवेशेऽव्ययभावगेंदोः पापार्जितद्रव्यसमुद्गमः स्यात् । क्षीणोरिपुस्थानगतेहिमांशौसम्यक्फलंप्रागगदितंवृथैव ।२४।
नीचस्थितस्याष्टमभावगेंदोर्दशाप्रवेशेहिगदोद्गमः स्यात् ।चेत्पापयुक्तोनिधनंतदानींजातिच्युतिंवालभतेमनुष्यः ।२५।
इतिचंद्रदशाफलानि । अथभौमदशाफलानि।ताराग्रहाःस्वोच्चगृहादिसंस्थावक्रास्तमानानुगतायदिस्युः।मिश्रंफलंते
निजपाककालेयच्छंतिनूनंसुधियाविचिंत्यम् १स्यात्पाकेक्षितिनंदनस्यचधनंशस्त्राच्चधात्रीपतेर्भैषज्याच्चचतुष्पदादपि
तथानानाविधैरुद्यमैः।पित्तासृक्ज्वरपीडनंक्षितिपतेर्भीतिंचनीतिच्युतिंमूर्च्छांधंचनिजालयेकलिरितिप्रोक्तंफलंसूरिभिः
।२।मूलत्रिकोणोपगतस्यपाकेक्षोणीसुतस्यात्मजदारसौख्यम् ।अर्थोपलब्धिःखलुसाहसेनरणांगणेचारुयशोविशेषात्
।३। मेषोपयातस्यचभूसुतस्यस्युःपाककालेकिलमंगलानि। स्यात्संततिःसाहसमाग्निबाधानानाविधारातिसमुद्भवःस्या
त् । ४ । वृषस्थितस्यावनिनंदनस्यपाकप्रवेशेपुरुषःसहर्षः। अनल्पजल्पोगुरुदेवभक्तःपरोपकारादरतासमेतः ।५।
युग्मस्थितोर्वीतनयस्यपाकेप्रवासशीलोऽनिलपित्तकोपः। बहुव्ययःस्यात्स्वजनैर्विरोधीनरःकलाज्ञोनितरांविधिज्ञः।६।
कर्कस्थभौमस्यभवेद्दशायामुद्यानवान्हिप्रभवार्थयुक्तः॥ नरोहिदारासुतदूरवर्तीक्लेशोपलब्धैर्बलहीनमूर्तिः॥ ७ ॥ संत्य
क्तनीचांशकुजस्यपाकेस्यातःपुमान्सर्वगुणोपपन्नः। चतुष्पदाढ्योबलवानकस्मात्प्रजायतेगुह्यरुजाभिभूतः। ८ ।सिं

हाश्रितक्ष्मातनयस्यपाकेनूनंभवेन्नायकताबहूनाम्।कांतासुताद्यैश्चवियोगताचबाधातथाहेतिहुताशजाता॥९कन्यानु
यातावनिनंदनस्यपाकेसदाचारपरोनरःस्यात्॥ यज्ञक्रियायामपिसादरःस्याद्दारात्मजोर्वीधनधान्यसौख्यः॥ १० ॥ तु
लागतेलासुतपाककालेस्याद्द्रव्यभार्यावियुतोहिमर्त्यः ॥ चतुष्पदाभावकलिप्रसंगैर्हतोत्सवोवैविकलांगयष्टिः। ११।
पुमान्भवेद्वृश्चिकराशिगस्यभौमस्यपाकेकृषिकर्मकर्त्ता ॥ सुसंग्रहोजातमनःप्रवृत्तिर्द्वेषीबहूनामतिजल्पकश्च ॥ १२॥
धनुर्धरस्थस्यधरासुतस्यपाकप्रवेशेद्विजदेवभक्तः॥ नरोनरेंद्राप्तमनोरथःस्यात्कलिप्रसंगोपहृतोत्सवश्च ॥ १३ ॥ व
क्रस्यनक्रोपगतस्यपाकेराज्योपलब्धिःस्वकुलानुमानात् ॥ युद्धेविवादेविजयोनितांतंसद्रत्नचामीकरवाजिसौख्यम्।
॥ १४। उच्चांशमुक्तस्यमहीसुतस्यपाकेप्रयत्नात्खलुकार्यसिद्धिः। शस्त्राद्भवेच्चापदतोपिभीतिःसंतोषजाल्पत्वमहाप्र
यासः ॥ १५ ॥ आचारहीनश्चसुतादिचिंताबहुव्ययोद्वेगसमाकुलत्वम्। कुंभोपयातस्यचमंगलस्यस्यात्पाककालेफल
मेतदेव ॥ १६ ॥ मीनोपयातावनिनंदनस्यदशाप्रवेशेहिसुतादिचिंता॥ व्ययामयत्वंचऋणोपलब्धिर्विचर्चिकादद्रुवि
देशवासाः॥ १७। संग्रामसंप्राप्तजयाधिशालीबलान्वितोऽत्यंतगुणाभिरामः। वर्गोत्तमांशस्थितभूसुतस्यपाकेचना
नाविधवस्तुलब्धिः॥ १८॥ नीचांशसंस्थस्यकुजस्यपाकेवृथाटनत्वंमनसोविषादः॥ फलोन्मुखंकार्यमतीवदूरेनीचत्वमु

च्चैर्विगताधिकलम् ॥ १९ ॥ मूलत्रिकोणोच्चगृहास्थितस्यकुजस्यकर्माधिगतस्यपाके ॥ राज्योपलब्धिर्विजयोरिपुभ्यः
सद्वाहनालंकरणानिनूनम् ॥ २० ॥ ॥ इतिभौमदशाफलानि ॥ ॥ अथबुधदशाफलानि ॥ ॥ विद्याविवेकप्रभु
तासमेतःकृषिक्रियायज्ञविधानचित्तः। महोद्यमादाप्तधनश्चनूनंभवेन्मनुष्यःशशिजस्यपाके ॥ १ ॥ शिल्पादिकर्मण्यति
कौशलंस्यान्नित्योत्सवोत्कर्षविशेषएव ॥ सद्वाद्यगीताभिरुचिर्नवीनसद्भांडभूषागृहनिर्मितत्वम् ॥ २ ॥ कुतूहलैर्भाषण
हास्यहर्षैःकालक्रमलंविनयोपलब्धिः ॥ आचार्यविद्वद्गुरुसंमतत्वंकलत्रपुत्रादिसुखापलब्धिः ॥ ३ ॥ पीडापिगाढाकफ
वातपित्तैरसंचयोर्थस्यचसौम्यपाके ॥ बलाबलत्वंप्रविचार्यसर्वंशुभाशुभत्वंसुधियाविचिंत्यम् ॥ ४ ॥ मेषस्थशीतद्यु
तिसूनुपाकेनैकत्रसंस्थानकरोनरःस्यात् ॥ स्तेयानृतद्यूतशठत्वयुक्तोविमुक्तसौजन्यविधिस्तुनिःस्वः ॥ ५ ॥ वृषाधिरूढ
स्यजडांशुसूनोर्दशाप्रवेशोव्ययकृन्मनुष्यः ॥ मातुस्त्वनिष्ठश्चकलत्रपुत्रमित्रादिचिंतागलरुग्भयार्त्तः ॥ ६ ॥ द्वंद्वाधिसं
स्थस्यबुधस्यपाकेत्वनेकवार्त्तावहुजल्पकर्त्ता। दारात्मजज्ञातिसुखोपपन्नोनूनंजनन्याश्चसुखेनहीनः। ७। कर्काश्रित
स्येंदुसुतस्यपाकेविदेशवासाल्पसुखोविरोधी ॥ मित्रैश्चसत्काव्यकलार्जितार्थोत्यर्थंमनुष्योव्यवसाययुक्तः ॥ ८ ॥ सिंह
स्थितस्येंदुसुतस्यपाकेलाभंभवेद्वैभवमेवधैर्यम् ॥ स्वामित्रदारात्मजसौख्यहानिःस्यान्मानवानांमतिहीनताच ॥ ९ ॥ उ

च्चाश्रितस्येंदुसुतस्यपाकेस्यान्मानवोवैबहुवैभवाढ्यः। लेखक्रियाकाव्यकलानुरक्तोजितारिपक्षश्चसुनीतियुक्तः । १० ।
मूलत्रिकोणोपगतस्यपाकेविवेकविख्यातिगुणैःप्रपूर्णः। विदेशयानानुरतोनरःस्यात्पराक्रमादाप्तधनोविधिज्ञः । ११ ।
तुंगत्रिकोणक्रमणप्रकर्तुर्बुधस्यपाकेपशुसौख्यहानिः । स्वबंधुवैरंविकलत्वमंगेकलिप्रसंगेतिविहीनतास्यात् । १२ ।
तुलागतस्येंदुसुतस्यपाकेस्यात्क्षीणताहङ्मतिवाग्विलासे ।।शिल्पादिकर्मण्यतिनैपुणंचवाणिज्यतोऽर्थःपशुपीडनंच ।
। १३ । पाकेभवेद्वृश्चिकसंस्थितस्यमृगांकसूनोर्मनुजोल्पतुष्टः । आचारकर्मक्रमणानुरक्तोव्ययेनयुक्तःस्वजनैर्वियुक्तः ।
।१४।शरासनाद्यासनतांगतस्यबुधस्यपाकेबहुनायकःस्यात्।मंत्रीचनामद्वयतासमेतःकृषित्रिक्रियावित्तयुतोमनुष्यः१५
मृगांकसूनोर्हिमृगस्थितस्यपाकेभवेद्भूरिऋणंनराणाम्। बह्वाटनंवैकपटत्वमुच्चैर्नीचैश्चसख्यंमतिहीनताच।१६। सौ
म्यस्यकुंभोपयुतस्यपाकेविहीनतेजामनुजोऽतिनिःस्वः। मित्रादिपीडापरिपीडितात्माविदेशयानव्यसनानुरक्तः । १७ ।
नीचांशसंस्थस्यकुजस्यपाकेविवेकसत्योपहितोहिमर्त्यः । स्थानांतरस्थोव्यवसायशीलःस्यादल्पलाभःकृशकायकांतिः
।१८। इतिबुधदशाफलानि।अथगुरुदशाफलानि।दशाप्रवेशेत्रिदशार्चितस्यभूपप्रधानाप्तमनोरथःस्यात्। सत्कर्मधर्मा
गमशास्त्रवेत्ताभवेन्मनुष्यःसततंविनीतः । १ । यज्ञादिकर्मण्यतिसादरत्वंभवेत्प्रवृत्तिर्द्विजदेवभक्तौ । अत्यर्थमर्थोविभुता

विशेषःपुत्रादितोषःपुरुषस्यनूनम् ।२। भूम्यंबराश्वादिसुखोपलब्धिर्बलोपपन्नःकुलधुर्यताच। गतागतागामिविचारणो
च्चैःसत्संगतिश्चारुमतिर्धृतिश्च ।३। दाहादिपीडापिगलेकदाचिद्विरुद्धभावस्थितितोविचिंत्यम्। सामान्यमेतत्फलमुक्त
मार्यैर्वक्ष्येऽधुनायत्प्रतिराशिसूक्तम् ।४। दशाप्रवेशेत्रिदशार्चितस्यमेषोपयातस्यभवेन्नराणाम्। धनंधनेशाद्बहुनायक
त्वंकलत्रपुत्रादिसुखोपलब्धिः। ५। वृषोपयातस्यचगीष्पतेःस्याद्दशाप्रवेशेपुरुषोतिदुःखी । विदेशवासीबहुसाहसश्च
वित्ताल्पताविंत्तगतोत्सवश्च ।६। युग्मोपयातस्यबृहस्पतेश्चदशाप्रवेशेपुरुषोशुचिःस्यात्। मात्राचगोत्रप्रभवैर्विरोधीक
लत्रवादातिविषादतप्तः ।७। वाचस्पतेरुच्चसमाश्रितस्यस्यात्पाककालेकुलराज्यलब्धिः । विशिष्टनाम्नाप्रथितत्वमुच्चै
रुच्चैश्चसख्यंबहुवैभवंच।८।वाचांपतेरुच्चसमुत्थितस्यपाकप्रवेशेपितृमातृदुःखी ।पूर्वार्जितद्रव्यपरिक्षयेणतप्तश्चना
नाव्यसनाभिभूतः। ९। सिंहस्थितस्यामरपूजितस्यपाकप्रवेशेधनवान्वदान्यः। नृपाप्तमानोननुमानवःस्याज्जायातनू
जानुजजातहर्षः। १०। कन्याधिरूढस्यगुरोर्दशायांभवेन्मनुष्योनुपलब्धमानः। कांतासुतावाप्तसुखःकदाचिच्छूद्रादि
नीचैःकलहप्रसक्तः। ११। तुलास्थदंभोलिभृदीज्यपाकेविवेकहीनःप्रमितान्नभोक्ता। कलत्रपुत्रैःकृतशत्रुभावश्चोत्साह
हीनोननुमानवःस्यात्। १२। बृहस्पतेर्वृश्चिकराशिगस्यदशाप्रवेशेमतिमान्समर्थः। प्राज्ञःसुतोत्साहयुतोविनीतोऽन्त

णीमवेन्नानियमेनहीनः। १३।मूलत्रिकोणांशगतस्यपाकेगुरोर्दशायांमतिमान्मनुष्यः। स्यान्मंडलीकोयदिवाप्रधानः
पित्रान्वितस्त्रीवचनानुसक्तः।१४।नखांशकेभ्यःपरतश्चचापेसंस्थस्यदेवेंद्रगुरोर्दशायाम्। कृषिक्रियायज्ञचतुष्पदेषुभ
वेन्मनुष्यस्यमनःप्रवृत्तिः। १५। नीचांशसंस्थस्यमृगान्वितस्यगुरोर्दशायांपरकर्मकर्ता। मर्त्योभवेज्जाठरगुह्यरोगीसा
ध्वीवियोगीधनबंधुभिश्च।१६।वाचस्पतेर्नीचलवोर्जितस्यपाकेनिषादात्कृषितोधनाप्तिः।भूमीरुहेभ्योधनवंचनाद्वाक्लेशो
पलब्धिर्नृनुमानवस्य।१७। पाकप्रवेशेकलश स्थितस्यवाचामधीशस्यनरःकलाज्ञः। विद्याप्रसादार्थमहामतिःस्यात्कां
ताविलासानुरतोनितांतम्।१८झषोपयातस्यचगीष्पतेःस्याद्दशाप्रवेशेपुरुषोमनीषी।सन्मानसूनुप्रमदादिसंपद्राजान्व
योपात्तमहासुखश्च।१९।इतिगुरुदशाफलानि। अथशुक्रदशाफलानि। दैत्यामात्यःस्त्रीयपाकेप्रवेशेयोषाभूषारत्नवस्त्रो
पलब्धिम्॥ नानामानंमानवानांप्रकुर्यात्कंदर्पस्याभ्युद्गमात्सौख्यमुच्चैः।१।गीतेनृत्येऽत्यंतसंजातहर्षोविद्याभ्यासप्री
तिकृच्चारुशीलः। बुद्ध्याधिक्यश्चान्नदानप्रवृत्तिर्दक्षोमर्त्योविक्रयेवाक्रयेवा॥ २ ॥ गोवाहनेभ्योननुनंदनेभ्यःसौख्यंभ
वेन्नंदननंदनेभ्यः। पूर्वार्जितस्यद्रविणस्यलब्धिःकलिःकुलेस्याच्चलनात्स्थलाच्च।३।कफानिलाभ्यांकिलनिर्बलंस्यात्
कलेवरंनीचतरैश्चवैरम्।मित्रादिचिंतापरितप्तमेवचित्तंचसख्यंकुजनैःकदाचित्।४।सामान्यतःप्रोक्तमिदंसितस्यदशा

फलंपूर्वंमुनिप्रणीतम्॥अथोच्यतेऽत्रप्रतिराशिजातंफलंप्रयोज्यंबलतारतम्यात् ।५। शुक्रस्यपाकेक्रियसंस्थितस्यस्त्री
विलसौख्यापचयोनराणाम्। सदाटनलंव्यसनानिनूनमुद्वेगताचंचलचित्तवृत्तिः।६।वृषोपयातोशनसोदशायांकृषिक्रि
यासत्पशुसौख्यवृद्धिः॥शास्त्रेमतिःस्यात्सुतरांविचित्रादातृत्वकन्याजननप्रसादाः।७। युग्मगामिभृगुजस्यदशायांमानु
षोभवतिकाव्यकलाज्ञः।हास्यविस्मयकथारुचिरुच्चैरन्यदेशगमनोत्सुकचित्तः।८। कर्कोपयातस्यासितस्यपाकेभवेन्मनु
ष्योनिजकार्यदक्षः॥ भार्यांतरावाप्तिसमुत्सुकोपिनानाप्रकारोद्यमकृत्कृतज्ञः ॥ ९ ॥ दैत्येंद्रवंद्यस्यमृगेंद्रगस्यपाकप्रवेशो
वनिताप्तवित्तः। नूनंभवेदन्यधनोपजीवीपश्वादिपुत्राल्पसुखो मनुष्यः।१०।पाकेभवेद्दानववंदितस्यकन्यास्थितस्यापचयःसुखानाम्। वित्ताल्पताभग्नमनोरथत्वंलोलंमनःस्वस्थलतश्चलत्वम्।११। तुलाधरस्थासुरपूजितस्यदशाप्रवेशेक्र
षिकृन्मनुष्यः। विशिष्टमानोधनवाहनाढ्यःस्वज्ञातिसंप्राप्तमहासुखःस्यात्।१२।भवेद्भृगोर्वृश्चिकराशिगस्यदशाप्रवे
शेपुरुषःप्रवासी। परस्यकार्यैर्निरतःप्रतापीऋणार्थयुक्तःकलहानुरक्तः ।१३। चापोपयातासुरपूजितस्यपाकेप्रकामंनृप
तेःप्रतिष्ठा। कलाकलापाकलनंकिलस्यात्क्लेशाधिकत्वंद्विषतांप्रवृद्धिः ।१४। नक्रस्थशुक्रस्यदशाप्रवेशेस्यात्पुरुषःश
त्रुविनाशदक्षः। श्लेष्मानिलाभ्यांविबलःकदाचित्कुटुंबचिंतासहितःसहिष्णुः।१५। उशनसःकलशस्थितिकारिणो

यदिदशापुरुषोव्यसनाकुलः ॥ गदयुतोवियुतःशुभकर्मणाव्रतहतोप्यनृतोक्तिरतोभवेत् । १६ । दशाप्रवेशेभृगुनंदनस्य
मीनाधिसंस्थस्यनृपप्रधानः । स्यान्मानवोऽत्यंतधनःप्रसन्नःकृषिक्रियाभोगभरोपपन्नः । १ । स्वोच्चांशभाजोभृगुजस्य
पाकेविलग्नकर्मोपगतस्यमर्त्यः ॥ क्षोणीहिरण्योत्तमवारणाद्यैर्युतोभवेद्वैनिजवंशनाथः ॥ १८ ॥ इतिशुक्रदशाफलानि ॥
अथशनिदशाफलानि ॥ भवेद्दशायांहिशनैश्चरस्यनरःपुरग्रामकृताधिकारः । धीमांश्चदानाधिकतातिशालीनानाकलाकौ
शलसंयुतश्च । १ । तुरंगहेमांबरकुंजराद्यैःसंपन्नतांयातिविनीततांच । देवद्विजार्चाभिरतोविशेषात्पुरातनस्थानकलब्धसौ
ख्यः ॥ २ ॥ देवद्विजेंद्रालयकृत्सुशीलोविशालकीर्तिःस्वकुलावतंसः ॥ आलस्यनिद्राकफवातपित्तजनांगनादद्रुविचर्चि
कार्त्तः ॥ ३ ॥ सामान्यमेतत्फलमुक्तमत्रशनेर्दशायांगदितंहिपूर्वैः ॥ अथाभिधास्येप्रतिराशिजातंफलंसुधीभिर्बलतोवि
चित्यम् । ४ । मेषोपयातस्यशनैश्चरस्यदशाप्रवेशेपुरुषोविशेषात् ॥ क्लेशाभिभूतःपतनाप्तदुःखोविचर्चिकाद्यामयतःकृ
शांगः । ५ । वृषोपयातस्यदिनेशसूनोःपाकप्रवेशेमतिमान्मनुष्यः । नरेंद्रसन्मानविराजमानःसंग्रामसंप्राप्तयशोविशेषः
। ६ । शनेर्दशायांमिथुनाश्रितस्यनरोभवेच्चारुविलासशीलः । चोराच्चदारादिजनाद्धनाप्तिरणप्रसंगाच्चपरोपकारी ।
। ७ । कर्कस्थितार्कात्मजपाककालेलोलंमनःपुत्रकलत्रमित्रैः ॥ श्रोत्रेचनेत्रेपरिपीडनंस्यात्कलेवरंनिर्बलतांप्रयाति । ८ ।

पंचाननस्थस्यशनेर्दशायांबाधाभवेद्वैविविधानराणाम्। दारात्मजाद्यैःकलहप्रसंगस्तुरंगगोदासजनेष्वसौख्यम्। ।९।
कन्योपयातस्यशनेर्दशायांभवेत्क्रमेणद्रविणोलब्धिः।जलाच्चभूमीरुहतस्तथोच्चप्रदेशतश्चापिमहाप्रमोदः।१०।काले
दशायांनलिनीशसूनोस्तुलागतस्योत्तमराज्यलक्ष्मीः। गजाश्वहेमांबररत्नपूर्णाभवेन्नराणांकरुणाधिकत्वम्।११।
सरीसृपस्थस्यशनैश्चरस्यपाकेनरःसाहसकर्मयुक्तः।वृथाटनोवैकृपणोऽनृतश्चनीचानुरक्तश्चदयाविहीनः।१२।धनुर्धरस्थ
स्यशनैश्चरस्यपाकेनरःस्यात्सचिवोनृपाणाम्।संग्रामधीरश्चतुरंघ्रियुक्तःकांतासुतानंदविनोदयुक्तः।१३।शनेर्दशायांम
कराश्रितस्यबहुश्रमोत्पन्नधनंनराणां।नपुंसकस्त्रीजनसेवनत्वंविश्वासघातेनधनक्षतिश्च। १४। शनेर्दशायांकलशा
श्रितस्यसुखानिनूनंमहतीप्रतिष्ठा। श्रेष्ठत्वमुच्चैःस्वकुलेनरस्यकृषिक्रियापुत्रधनादिलब्धिः।१५।भवेद्दशायांननुभानु
सूनोर्मीनोपयातस्यचमानवस्य। नानापुरग्रामधनांगनाभ्यःसुखंतथोत्साहविहीनताच। १६। इतिजातकाभरणेशनि
दशाफलानि। अथमहादशाफलानि । दशादृकाणैश्चतनोःक्रमेणस्यादुत्तमामध्यतमाधमाच । स्थिरेचकष्टाशुभदाच
मध्यामिश्रेऽधममध्यतमोत्तमाच।१।शुभानिमध्यानिचनिंदितानिफलानिलग्नेशदशोदितानि।तान्येवकल्प्यानिसु
धीभिरत्रबलानुमानात्तननायकस्य।२।संस्थालतेयःकिलदिग्बलेनखेटःस्वकाष्ठांपुरुषंचनीत्वा।महाप्रतिष्ठांकुरुतेदशा

यांनानाधनाभ्यागमनानिनूनम् । ३ । विलोमगामीग्रहपाककालेस्थानार्थसौख्यान्यतिचंचलानि । प्रवासशीलत्वमती
वजंतोर्लोकेमहत्वापचयत्वमेव ।४। ऋजुप्रयातद्युचरस्यपाकेसन्मानसौख्यार्थयशःप्रवृद्धिः षष्ठाष्टमद्वादशवर्जितस्यग्रह
स्यपाकेऽभिमतार्थसिद्धिः । ५। नीचारिभस्थस्यचवक्रिणोवापाकेकुकर्माभिरतिर्मनुष्यः । विदेशवासीनिजबंधुवर्गैस्त्यक्तो
भवेदाग्रहताभियुक्तः । ३। स्वर्भानुयुक्तस्यचखेचरस्यदशावरिष्टाप्यतिरिष्टदास्यात् । पाकावसानेननुमानवानांदुःखा
निहानिश्चाविदेशयानम् । ७। जननराशिजनुस्तनुनाथयोरिपुदशासमयेमातिविभ्रमः । भयमरेरपिराज्यपरिच्युतिःखल
जनैःकलहाबलहीनता । ८। लग्नेश्वरस्याष्टमभावगस्यभवेद्दशायामतिपीडनंहि । दशावसानेऽपिचमानवानांभवेत्समा
प्तिःखलुजीवितस्य । ९ । क्रूरस्यखेटस्यदशांतरालेक्रूरग्रहस्यांतरजादशाचेत् । शत्रूद्गमोऽर्थस्यपरिक्षयःस्यादायुःक्षयो
वंतिवदेन्नराणाम् । १० । दशाप्रवेशेऽपिखगाःसलग्नाःकार्याःस्फुटास्तत्रदशापतिश्चेत् लग्न १ त्रि ३ ख १० या ११
रिःगतोऽथलग्नेतान्मित्रवर्गःशुभदादशासा ॥ ११ ॥ श्रेष्ठाप्रदिष्टेष्टफलाधिकस्यदुष्टादशाकष्टफलाधिकस्य ॥ यस्येष्ट
कष्टेभवतःसमानेफलंविमिश्रंकिलतस्यपाके । १२ । दशाप्रवेशेखचरःस्वतुंगेमूलत्रिकोणेयदिवास्वगेहे । शुभेष्टवर्गस्थि
तिकृच्छुभेष्टैर्दृष्टेदशारिष्टहरोभवेत्सः ॥ १३ ॥ ॥ इतिश्रीजातकाभरणेमहादशाफलानि ॥ ॥ अथांतर्दशाफलम् ॥

अथप्रवक्ष्येखलुखेचराणामंतर्दशाःसूक्ष्मफलप्रसिद्ध्यै।विचारपूर्वंसदसत्प्रकल्प्यंफलंसुधीभिर्विधिनोदितेन।१।अंतर्द
शाचेदशुभग्रहाणामेकर्क्षगाणांकुरुतेसदैव।गदांविवादांरिपुभूपभीतिंदैन्यंधनस्यापचयंविशेषात्।२।अंतर्दशायांमदन
स्थितस्यखेचारिणःस्यान्मरणंगृहिण्याः। रोगःकुभोगःकलहादिभंगःसंगश्चनिंद्यैर्हरणंधनस्य। ३ ।खेचारिणामष्ट
मभावगानामंतर्दशासंजनयेदरिष्टम्।धनस्यनाशंव्यसनानिपुंसांषष्ठोपगस्यापिगदप्रवृद्धिम् ।४। त्रिकोणमेषूरणवे
श्मगानामंतर्दशासौख्यमतीवनित्यम्।करोतिलाभंविविधंनराणामारोग्यतांमानसमुन्नतिंच।५।अथसूर्यांतर्दशाफ
लानि।करोतिचंद्रस्तरणेर्दशायांसुवर्णभूषांबरविद्रुमाप्तिम्।समुन्नतिंमानसुखाभिवृद्धिंविरोधिवर्गापचयंजयंच ।१।
पंकेरुहेशस्यचरन्विपाकेकुर्यान्मृगांकोयदिलाभमुच्चैः ।प्रमादमध्ये ग्रहणींचपांडुंकेषांचिदेतन्मतमत्रचोक्तम्।२।सत्प्र
वालकलधौतसुचैलंमंगलाभिर्विजयंचविधत्ते ।मंगलःकमलिनीशदशायांभूमिपालकुलतःकिलमानम् । ३। विच
र्चिकादद्रुविकारपूर्वैःपामामयैर्देहनिपीडनंस्यात्।धनव्ययश्चापिहतोत्सवश्चविधोःसुतेभानुदशांप्रयाते । ४। सद्व
स्त्रधान्यादिषुसंग्रहेच्छास्वच्छामतिर्विप्रसुरार्चनेषु।भूपाप्तसन्मानधनानिनूनंभानोर्दशायांचरतींद्रवंद्ये।५।विदेशयानं
कलहाकुलत्वंशूलंचमौलिस्थलकर्णपीडाम्।गाढज्वरंचापिकरोतिनित्यंदैत्यार्चितेभानुदशांप्रयातः।६। नीचारिभूमी

पतिभीतिरुच्चैः कंडूयनाद्यामयसंभवः स्यात् । मित्राण्यमित्राणिभवंतिनूनंशनैश्चरेभानुदशांतरस्थे ।७। इतिसूर्यांतर्दशा
फलानि । अथचंद्रांतर्दशाफलानि । नरेश्वराद्गौरवमर्थलाभंक्षयामयार्तिंप्रकृतेर्विकारम् । चोराग्निवैरिप्रभवांचभीतिंशीतां
शुपाकेकुरुतेदिनेशः ।१। कोशभ्रंशंरक्तपित्तादिदोषंरोषोत्पत्तिंस्थानतःप्रच्युतिंचाकुर्यात्पीडांमातृपित्रादिवर्गैर्भूमीसूनुर्या
मिनीनाथपाके ।२। उदारनामांतरलब्धिमुच्चैर्ललामगोभूमिगजाश्ववृद्धिम् । विद्याधनैश्वर्यसमुन्नतत्वंकुर्याद्बुधश्चंद्रदशांत
राले । ३ । विशिष्टधर्मोधनधान्यभोगानंदाभिवृद्धिर्गजवाजिसंपत् । पुत्रोत्सवश्चापिभवेन्नराणांगुरौसुराणांशशिपाकसं
स्थे । ४ । नानांगनाकेलिविलासशीलोजलोद्भवैर्धान्यधनैश्चयुक्तः । मुक्ताफलाद्याभरणैरपिस्याद्दिंदोर्दशायांहिसितेमनु
ष्यः । ५ । नरेंद्रचाराहितवान्हिभीतिंकलत्रपुत्रासुखरुक्प्रवृद्धिम् । करोतिनानाव्यसनानिपुंसांशनिर्निशानाथदशांप्रवि
ष्टः ।६। इतिचंद्रांतर्दशाफलम् । अथभौमांतर्दशाफलानि । नानाधनाभ्यागमनानिनूनंसन्मानवृद्धिंमनुजाधिराजात् । च
ण्डत्वमाजौविजयंविदध्याद्भानुर्धरासूनुदशांतरस्थः ।१। दुर्गशैलवनसंचलनेच्छोबंधुतातजनितातिविरोधः । मानवोभवति
भूतनयांतर्भास्करेचरतिकोपिवदंति ।२। नित्योत्सवानंदमहापदानिमुक्ताफलद्रव्यविभूषणानि । मित्रोद्गमंश्लेष्मविकार
मिंदुर्भौमस्यपाकेविचरन्करोति । ३ । अरातिभूपामयतस्करेभ्यःपीडांवियोगंसुतदारामित्रैः । स्वल्पोत्सवंयच्छतिचंद्रसू

नुर्भौमस्यपाकेयदिसंप्रविष्टः।४। कलाधिकत्वंनृपतेर्धनाप्तिंकलत्रमित्रात्मजवाहसौख्यम्।सत्कर्मधर्मानुरतत्वमुच्चैर्बृ
हस्पतिर्भौमदशांप्रविष्टः।५। विदेशयानव्यसनामयाद्यैःकुटुंबवादद्रविणव्ययैश्च।नानाप्रवासैश्चलचित्तवृत्तिर्भौमां
तरदानवराजपूज्ये।६। कलत्रपुत्रात्मजनेषुबाधाप्राणप्रयाणांतशरीरपीडा।स्वस्थानयानंयदिभानुसूनोरंतर्दशाभौमद
शांतराले।७।इतिभौमांतर्दशाफलम् । अथबुधांतर्दशाफलम् । तुरंगहेम्नांचसुविद्रुमाणांसदंबराणामपिवारणा
नाम्।भवेदवाप्तिर्बहुवैभवानांसौम्यस्यपाकेतपनेप्रपन्ने।१। स्वस्थानतःसंचलनंकदाचिद्रदप्रकोपात्मजजन्मवित्त
म् । धर्मप्रवृत्तिंकुरुतेज्ञपाकेपंकेरुहेशःप्रवदंतिकेचित् ।२। पामादिनानामयसंभवःस्यान्मृतप्रजासंजननंविवादः
पित्तप्रकोपःखलुयानपीडायदाजडांशुर्ज्ञदशांप्रपन्नः।३। गुह्यामयार्थव्यसनेयुतःस्यात्कांतासुतप्रीतिविमुक्तचित्तःविलु
प्तधर्मोमनुजःप्रविष्टेबुधस्यमध्येवसुधातनूजे। ४। कांतासुतानंदयुतोऽरिहंतासत्कर्मकृच्चारुमतिर्विनीतः। मंत्रीनरः
स्यात्पितृमातृदुःखीबृहस्पतौसौरिदशांप्रयाते ।५। विबुधसाधुजनातिथिसादरःसुकृतकर्मसमुत्सुकमानसः। विवि
धवस्त्रविभूषणभाङ्नरोबुधदशांतरगेसतिभार्गवे। ६। नानाप्रयासैश्चनिरोधनैर्वाशिरोरुजावापिशरीरभाजाम्। क
रोतिबाधांविबुधांतरालेसितःप्रयातःप्रवदंतिकेचित् ।७। सत्कर्मधर्मद्रविणानुकंपाकंदर्पहीनोमनुजःप्रलापी।वाता

मयातौतिमृदुस्वभावःसौम्यांतरालेनालिनीशसूनौ ।८॥ इतिबुधांतर्दशाफलम् । अथगुर्वंतर्दशाफलानि ।सुतो
धनानाविधवस्तुलाभंविशिष्टनामांतरमाधिपत्यम् ॥ मानंनरेशात्कुरुतेदिनेशोवाचामधीशस्यदशांप्रपन्नः ॥ १ ॥
नानांगनाक्रीडनजातचित्तःश्रीराजचिन्हैश्चविराजमानः । विद्यानवद्यार्थयुतोनरःस्याज्जीवांतरेशीतकरप्रचारे ।२।
रणांगणप्राप्तयशोविशेषःसद्भोगसौख्यार्थसमन्वितश्च । प्रौढप्रतापोऽतितरांनरःस्याद्धरासुतेजीवदशांप्रयाते ।३।
शीर्षेगुदेवापिभवेत्कदाचित्पीडानराणामरिभीतियुक्ता ।बलक्षयःसंचलनंकुजस्यजीवांतरालेप्रवदंतिकेचित् ।४।सद्बु
द्धिकौशल्यसुरार्चनानिसदिंदिरामंदिरवाहनानि। कलत्रपुत्रादिसुखानिनूनंकुर्याद्बुधोजीवदशांप्रपन्नः ।५। विदेशया
नंचलचित्तवृत्तिर्जलात्प्रमादःशिरसिप्रपीडा। गुरोर्दशायांचरतींदुपुत्रेकेषांचिदेवाक्रमतांनिरुक्तम् ।६। निजौर्वियोगोर्थ
विनाशनंचश्लेष्मानिलश्चापिकलिप्रसंगः ।स्यान्मानवानांव्यसनोपलब्धिर्भृगोःसुतेजीवदशांप्रयाते । ७। धर्मक्रि
यायांनिरतत्वमुच्चैर्विद्यांबरान्नादिकसंग्रहश्च। द्विजाश्रयःस्याद्गुरुपाकयातेसितेवदंतीतिफलंतुकेचित् ।८।वेश्यास
व्द्यूतकृषिक्रियाद्यैर्विलुप्तधर्मार्थयशाःकृशांगः॥ खरक्रमेलादियुतोनरःस्याद्गुरोर्दशायांचालितेऽर्कसूनौ ॥ ९॥ इति
गुर्वंतर्दशाफलानि। ।अथशुक्रांतर्दशाफलानि। ।भूपभीतिरपिबंधुनिमित्तंवित्तनाशनमरात्युदयःस्यात् । क्रोडगंड

नयनेष्वपिपीडाभार्गवेयादिरवेर्विनिवेशः ।१। शीर्षदंतनखपीडनमुच्चैःकामलप्रबलताविलपित्तम् । श्वापदादपिभयं
चनराणांभार्गवांतरगतेहिमरश्मौ ॥ २ ॥ भूदेवदेवाग्निमनःप्रवृत्तीरणांगणेस्याद्विजयोनराणाम् ॥ मातंगकार्याद्धानिता
श्रयाद्वालाभःसितेचंद्रदशेतिकेचित् ।३। पित्ताक्षताद्रक्तविकारतावावैकल्यमंगेप्रभवन्नराणाम् । उत्साहहीनत्वमती
वयातेभूमीसुतेदैत्यगुरोर्दशायां ।४। सन्माननानाविधवस्तुसौख्यंभूमीपतेःस्यात्खलुभूमिलाभः । अंगारकेभार्गवपा
कसंस्थेकेषांचिदेवंमतमास्तिशस्तम् ॥ ५ ॥ वृक्षैःफलैश्चापिचतुष्पदाद्यैर्वित्तंभवेत्सस्याविधिनृपेण ॥ दुरंतकार्याभिराति
र्नितांतंभृगोर्दशायांचरतींदुसूनौ ॥ ६ ॥ यज्ञादिसत्कर्मणिसादरत्वंगतार्थसिद्धिःसुतदारसौख्यम् ॥ महापदानेकविभूष
णाप्तिर्भृगोर्दशायांचरतींद्रवंद्ये ।७। मित्रोन्नतिर्ग्रामपुराधिपत्यंवृद्धांगनाकेलिरतीवनित्यम् । स्याद्वैरिनाशोह्युशनोद
शायांशनैश्चरस्यांतरजादशाचेत् ॥ ८ ॥ इतिशुक्रांतर्दशाफलानि ॥ अथमंदांतर्दशाफलम् ॥ धनांगनानंदनबंधुपीडा
गाढापिबाधात्मकलेवरस्यात् ॥ रिपूद्गमःसंचलनंनलिन्याःपत्यौस्थितेमंददशांतराले ।१। नित्यंकलिर्बंधुजनैर्वियोगो
हानिर्मृतिर्वापिभवद्गृहिण्याः ॥ उत्साहसौख्योपहतिर्नितांतंशीतद्युतौमंददशांतरस्थे ।२। स्वस्थानयानंविकलत्वमंगेध
नांगनासूनुवियोजनंस्यात् । संन्मानहानिर्ननुसूर्यसुनोर्दशांतरभूमिसुतप्रचारे । ३ । धनांगनासूनुसुखोपपन्नःसद्रा

जमानेनाविराजमानः। विद्वज्जनानंदकरःकफातौंमत्यौंभवेज्ज्ञेशनिपाकसंस्थे। ४ । कलाकलापेकुशलोविलासीपद्मा
लयालंकृतचारुशीलः । भूपालभूलाभयुतोनरःस्याद्बृहस्पतौमंददशांप्रयाते। ५ । योषाविभूषासुतसौख्यलब्धिःश्री
ग्रामदेशाधिकृतत्वमुच्चैः । यशःप्रकाशोऽरिकुलस्यनाशः शनेर्दशायामुशनःप्रवेशे। ६। अंतर्दशाचेन्नलिनीशसूनोर्दं
शांतरालेकिलमंगलस्य॥ भवेत्तदानींनिधनंनराणांयद्यप्यहोदीर्घमवाप्तमायुः ॥ ७ ॥ लग्ननाथरिपुर्लग्नदशायांप्रविशे
द्यदि। अकस्मान्मरणंकुर्यात्प्राणिनांसत्यसंमतम् । ८। इतिशनिद० । इतिश्रीजातकाभरणेअंतर्दशाध्यायः । अ
थदानाध्यायः। येखेचरागोचरतोऽष्टवर्गाद्दशाक्रमाद्वाप्यशुभाभवंति । दानादिनातेसुतरांप्रसन्नास्तेनाधुनादानविधिं
प्रवच्मि। १ ।माणिक्यगोधूमसवत्सधेनुःकौसुंभवासोगुडहेमताम्रम्। आरक्तकंचंदनमंबुजंचवदंतिदानांहिविरोच
नाय ।२। सद्वंशपात्रस्थिततंडुलांश्चकर्पूरमुक्ताफलशुभ्रवस्त्रम् । युगोपयुक्तंवृषभंचरौप्यंचंद्रायदद्याद्घृतपूर्णकुंभ
म्।३। प्रवालगोधूममसूरिकाश्चवृषोऽरुणश्चापिगुडःसुवर्णम् । आरक्तवस्त्रंकरवीरपुष्पंताम्रंहिभौमायवदंतिदान
म्। ४ । चैलंचनीलंकलधौतकांस्यंमुद्गाज्यगारुत्मतसर्वपुष्पम् । दासीचदंतोद्विरदस्यनूनंवदंतिदानंविधुनंदना
य ॥ ५॥ शर्कराचरजनीतुरंगमःपीतधान्यमपिपीतमंबरम्। पुष्परागलवणंचकांचनंप्रीतयेसुरगुरोःप्रदीयताम्। ६।

।चित्रांबरंशुभ्रतरस्तुरंगोधेनुश्चवज्रंरजतंसुवर्णम् । सुतंडुलाज्योत्तमगंधयुक्तंवदंतिदानंभृगुनंदनाय । ७ । माषांश्च
तैलंविमलेंद्रनीलास्तिलाःकुलित्थामाहिषीचलोहम् । सदक्षिणंचेतिवदंतिनूनंदुष्टायदानंरविनंदनाय।८।गोमेदरत्नंचतुरं
गमश्चैसुनीलचैलानिचकंबलश्च । तिलाश्चतैलंखलुलोहमिश्रंस्वर्भानवेदानमिदंवदंति । ९ । वैडूर्यरत्नंसतिलंचतैलं
सुकंबलश्चापिमदोमृगस्य । शस्त्रंचकेतोःपरितोषहेतोरुदीरितंदानमिदंमुनींद्रैः । १० । इतिश्रीजातकाभरणेदानाध्या
यः । अथनष्टजातकाध्यायः । आधानकालोप्यथजन्मकालोनज्ञायतेयस्यनरस्यनूनम् । प्रसूतिकालंप्रवदंतितस्यन
ष्टाभिधानादपिजातकाच्च । १ । तज्जातकंयेनशुभाशुभाप्तिर्जातस्यजंतोर्जननोपकालात् । तस्मिन्प्रनष्टेसतिजन्मका
लोयेनोच्यतेनष्टकजातकंतत् । २ । मेषादितःप्रश्नविलग्नलिप्ताःकार्याःक्रमात्तामुनिभिःखचंद्रैः । गजैश्चवेदैर्दशभि
श्चबाणैःशैलैर्भुजंगैःखचरैःशरैश्च ॥ ३ ॥ शिवैःपतंगैः ७ १० ८ ४ १० ५ ७ ८ ९ ५ ११ १२ निहताःपुनस्ता
विलग्नगाश्चेद्भृगुभौमजीवाः । तदातुरंगैः ७ करिभिः ८ खचंद्रैः १० गुण्याःशरैरन्यखगायदिस्युः । ४ ।
ग्रहद्वयंवाबहवोविलग्नेतदातदीयैर्गुणकैश्चगुण्याः । एवंकृतेकर्मविधाययोग्योराशिःपृथक्स्थःपरिरक्षणीयः । ५ ।
पथकस्थराशिर्मुनिभिर्विनिघ्नस्त्र्याद्येद्रकाणेनवयुग्द्वितीये यथास्थितोयंनववर्जितोऽत्यंभसंज्ञयाप्तोत्थवशेषमृक्षम् ६।

स्त्रीपुत्रमित्रादिनिमित्तकंचेत्पृच्छाविलग्नंत्वृतुभिश्चवेदैः ॥ त्रिभिःशरैर्युक्तमनुक्रमेणततोविलग्नस्यकलाविधेयाः ॥ ७॥
लग्नस्यराशेर्गुणकेनगुण्याश्चत्संभवोलग्नगतग्रहस्य ॥ पुनस्तदीयेनगुणेनगुण्याःप्रागुक्तवद्धंपरिवेदितव्यम् ।८ ।
दशाहतेकर्मविधानराशौप्राग्वन्नवोनेप्यथवाधिकेस्मिन् । खार्कैर्हतेशेषमिताष्टसंख्यमायुर्गतंतत्खलुपृच्छकस्य । ९ ।
षड्भिर्विभक्तेऋतवोभवंतिशेषांकतुल्याःशिशिरादयःस्युः । द्विभाजितेशेषकमेकमत्रपूर्वापरौतावृतुजौचमासौ । १० ।
अष्टाहतेकर्मविधानराशौप्राग्वन्नवोनेप्यथवाधिकेस्मिन् । द्विभाजितेशेषकमेकमत्रतुल्येस्तिपूर्वापरपक्षकौस्तः । ११ ।
पंचेंदुभक्तेसतिशेषतुल्याःपक्षेचतस्मिन्स्तिथयोभवंति । नक्षत्रतिथ्यानयनाययोग्यादहर्गणाद्वारविचारणात्र । १२ । स
प्ताहतेकर्मविधानराशौप्राग्वन्नवोनेप्यथवाधिकेस्मिन्।द्विभाजितेशेषकमेकमात्रंदिवाचरात्रौजननंतदानीम्।१३।पंचा
हतेकर्मविधानराशौप्राग्वन्नवोनेप्यथवाधिकेस्मिन्।दिनस्यरात्रेरथवाप्रमित्याभक्तेवशिष्टांदिनरात्रिनाड्यः।१४।इतिश्री
जातकाभरणेनष्टजातकाध्यायः । अथनिर्याणाध्यायः । दिनकरप्रमुखैर्निधनस्थितैर्भवतिमृत्युरितिप्रवदेत्क्रमात् । अनल
तोजलतःकरवालतोज्वरभवोगदतःक्षुधयातृषा।१।स्थिरश्चरोद्व्यंगसमाह्वयश्चराशिर्यदाजन्मनिचाष्टमस्थःस्वकीयदेशे
विषयांतरेचमार्गेप्रकुर्यान्मरणंक्रमेण । २ । आयुर्गृहंखेटविवर्जितंचेद्विलोकयेद्वाबलवान्गृहेंद्रः । तद्धेतुजातंप्रवदंतिम्

त्युंबहुप्रकारंबहवोबलिष्ठाः ।३। पित्तंकफःपित्तमथात्रिदोषःश्लेष्मानिलौवाप्यनिलःक्रमेण । सूर्यादिकेभ्योमरणस्यहेतुः
प्रकल्पितःप्राक्तनजातकज्ञैः ।४। युक्तंनैवालोकितंखेचरैर्द्रेमृत्युस्थानंयोविलग्नेद्रकाणः । द्वाविंशोस्मात्सोपितस्यापिताभं
कुर्यान्मृत्युहेतुनास्वेननूम् ।५। अनलतोजलतोयदुदीरितंभवतितत्रिलवाधिपहेतुकम् । अथदृकाणफलानिसविस्तरं
मुनिवरैरुदितानिवदाम्यहम् ।६। मेषस्यपूर्वत्रिलवेनदृष्टेशुभग्रहैःपापनिरीक्ष्यमाणे । प्लीहोद्भवोवाविषपित्तजोवामृत्युस्त
दानींपरिवेदितव्यः ।७। मेषद्वितीयेजलजोत्रनांतेतृतीयकेकूपतडागजातः॥ वृषस्यपूर्वत्रिलवेखराश्वक्रमेलकादिप्र
भवोहिमृत्युः ।८। द्वितीयकेपित्तहुताशचौरैरुच्चस्थलःइवादिभवस्तृतीये॥ आद्येदृकाणेमिथुनेचवातश्वासैर्द्वितीयेवृ
षगेत्रिदोषैः ।९। गजादितःपर्वतपाततोवाभवेदरण्येमिथुनांतदृक्के । अपेयपानादपिकंटकाच्चस्वप्नाच्चकर्कप्रथमेदृकाणे
।१०। विषादिदोषादतिसारतोवाकर्कस्यमध्यत्रिलवेमृतिःस्यात् । महाभ्रमप्लीहकगुल्मदोषैःकर्कांतदृक्केनिधनंनिरुक्तम्
।११।विषांबुरोगैःश्वसनांबुरोगैरपानपीडाविषशस्त्रकैश्च । क्रमेणसिंहस्थदृकाणकेषुनूनंमुनींद्रैर्मरणंप्रदिष्टम् ।१। कन्या
द्यदृक्केनिलमौलिरुग्जोदुर्गाद्रिपाताच्चनृपैर्द्वितीये॥खरोष्ट्रशस्त्रांबुनिपातकांतानिमित्तजातंनिधनंतृतीये।तुलादृकाणे
प्रथमेनिपातात्कलत्रतोवापशुतोपिमृत्युः । नूनंद्वितीयेजठरामयैश्चव्यालाज्जलाच्चापिभवेत्तृतीये ।१४। पूर्वेदृकाणेखलुवृ

श्चिकस्यमृत्युर्विषान्नास्त्रभवोऽवगम्यः ॥ भारश्रमाद्वाकटिवास्तिरोगैर्भवेत्तृतीयेत्रिलवेतुमार्गे ॥ १५ ॥ जंघास्थिभंगाश्म
कलोष्ठकाष्ठैर्भवेत्तृतीयेत्रिलवेऽलिराशेः । आद्येदृकाणेधनुषोमृतिःस्याद्गुदामयैश्चापिमरुद्विकारैः । १६ । विदाहतोवा
विषतःशराद्वानाशोदृकाणेधनुषोद्वितीये । भवेज्जलाद्वाजलचारिणोवाक्रोडामयाद्वाधनुषस्तृतीये । १७ । पूर्वेदृकाणे
मकरस्यसिंहाद्व्याघ्राद्वराहाद्वृकतोद्वितीये । यादोभुजंगैश्चतथातृतीयेचोराग्निशस्त्रज्वरतोहिमृत्युः । १८ । कुंभस्यपूर्वत्रि
लवेषुपत्नीसुतोदरव्याधिकृतोद्वितीये । गुह्यामयात्पर्वतपातनाद्वाविषात्तृतीयेमुखरुक्पशुभ्यः । १९ । मीनाद्यदृक्केग्रहणी
प्रमेहगुल्मांगनाभ्यश्चभवेद्द्वितीयेजलोदराद्यैश्चगजगृहैर्वाजलस्यमध्येपिचनौप्रभेदात् । २० । अंत्येदृकाणेपृथुरोमसंस्थे
मृत्युःकुरोगैःपरिवेदितव्यः ॥ एवंतदानींनिधनंनियुक्तंनैवप्रदृष्टंगगनेचरेंद्रैः । २१ । पापांतरेशीतकरेकुमार्यांशोषान्मृति
र्वारुधिरप्रकोपात्शुभांतरेशीतकरेऽष्टमस्थेपातेनपाशेनहुताशनेन ॥ २२ ॥ पापेक्षितौपापखगौत्रिकोणेयद्वाष्टमेबं
धभुजंगपाशात् । दृक्काणकाःस्युर्जननेहियस्यकारागृहेस्यान्मरणंहितस्य । २३ । मीनोदयेर्केस्तगतेमृगांकेसपापके
चास्फुजितिक्रियस्थे । भार्याकृतंस्यान्मरणंस्वगेहेवदंतिसर्वेमुनयःपुराणाः । २४ । क्षीणेंदुमंदौगगनेचतुर्थेदिनाधिराजो
ऽत्रनिजोथवास्यात् । मूर्तित्रिकोणोपगताःखलाख्याःशूलस्यमौलौप्रलयंप्रयांति । २५ । मेषूरणस्थेधरणीतनूजेदिवामणौ

क्षीणेंदुभौमार्किदिवाकरैःस्यादायुःखल
भूतलभावसंस्थे। क्षीणेंदुमंदप्रविलोक्यमानेकष्टाभिघातेनवदंतिमृत्युम्। २६। क्षीणेंदुभौमार्किदिवाकरैःस्यादायुःखल
ग्नांबुगतैर्गदादेः। मृत्युःखपुण्योदयपंचमस्थैस्तैरेवनानाविधकुट्टनेन। २७। भूसूनुसूर्यार्कसुतायादिस्युश्चतुर्थजामित्रन
भोगृहस्थाः। कुर्वंतितेशस्त्रहुताशभूपप्रकोपजातंनियमेनमृत्युम्। २८। कुजेंदुमंदाःखजलाद्रिसंस्थाःक्रामिक्षतैस्तैर्मरणंप्र
कुर्युः। मेषूरणस्थैरविभौमसोमैर्भवेत्प्रवासेनलवाहनाद्यैः। २९। क्षीणेंदुमंदार्कयुतोविलग्नेभूमीसुतेसप्तमभावसंस्थे।विना
शनंयंत्रनिपीडनेनभवेदवश्यंपरिवेदितव्यम्। ३०। भौमेतुलायांचयमेचकर्कस्थेलेयरश्मौरविजालयस्थे।विण्मूत्रितासंकु
लितप्रदेशेऽवश्यंविनाशःपरिवेदितव्यः। ३१। मेषूरणास्तांबुगृहैःक्रमेणक्षीणेंदुमंदावनिपुत्रयुक्तैःदुर्गांतरालेचाशिलोच्च
येवावनांतरालेप्रलयःकिलस्यात्। ३२। अलोपपन्नावनिसूनुदृष्टेक्षीणेविधौरंध्रगतेऽर्कपुत्रे।गुह्यामयाद्वाक्रमिहेतुतोवाभ
वेदवश्यंमरणरणाद्वा ।३३। मित्रेकलत्रोपगतेसभौमेमंदेष्टमस्थेचाविधौचतुर्थे । विहंगमश्वापदकारणेननिर्याणमा
हुर्मुनयः पुराणाः। ३४। लग्नाष्टमत्रिकोणेषुभानुभौमार्कजेंदुषु । पार्वतीयोभवेन्मृत्युर्भित्तिपातभवोऽथवा । ३५। सौ
म्येऽष्टमस्थेशुभदृष्टियुक्तेधर्मेश्वरेवाशुभखेचरेंद्रे। तीर्थेमृतःस्याद्यादियोगयुग्मंतीर्थेहिविष्णुस्मरणेनमृत्युः ।३६। धर्म
स्वामीधर्मगोधर्मसंस्थौसूर्यक्ष्माजौचेत्तदाग्निप्रवेशम् ॥ कुर्यात्पत्नीलग्नजामित्रनाथौमित्रेस्यातांनान्यथासद्भिरुक्तम् ॥

।३७। इतिश्रीजा०निर्याणाध्यायः॥ ॥ अथमेषराशिस्थचंद्रकृतनिर्याणम् । इतिप्रणीतंनिर्याणंप्राचीनमुनिसंमत
म् ।यवनैरुदितंयत्रसविस्तरमथोच्यते। १। धनवान्पुत्रवानुग्रःपरोपकरणेरतः । सर्वकर्मसमायुक्तःसुशीलोराजव
ल्लभः ।२। गुणाभिरामःसततंदेवब्राह्मणपूजकः।कोष्णशाकाल्पभोक्ताचताम्रविस्तृतलोचनः। ३। शूरःशीघ्रप्रमा
दीचकामीदुर्बलजानुकः । शिरोव्रणयुतोदाताकुनखीसेवकप्रियः ।४। द्विभार्यःसंगरेभीरुश्चपलोनितरांभवेत् । प्रथ
मेसप्तमेवर्षेत्रयोदशमितेज्वरः।५।षोडशेवासप्तदशेवर्षेस्यात्तुविषूचिका । तृतीयेद्वादशेवापिजलाद्भीतिःप्रजायते
।६। पंचविंशमितेवर्षेसंतानंचानिशांधता।द्वात्रिंशत्प्रमितेवर्षेशस्त्रघातःप्रजायते। ७। कार्यारंभप्रलापीचविदेश
गमनेरतः । कृशांगःशीघ्रगोमानीशूलभक्षणसंयुतः ।८।वाताधिक्यःशुभैर्दृष्टेचंद्रेनवतिसंमितम्।आयुस्तस्यविनि
र्देश्यंकार्तिकस्यासितेतरे। ९। पक्षेबुधेनवम्यांचनिशीथेचशिरोरुजा।निधनंजायतेनूनंजन्मनीदावजास्थिते ।१०।
इतिमेषराशिस्थचंद्रकृतनिर्याणम् । अथवृषभराशिस्थेचंद्रेनिर्याणम् । अल्पतेजानरःस्तब्धःकर्मशुद्धिविवर्जितः ।
सत्यवागर्थवान्कामीकामिनीवचनानुगः ।१। चिरायुरल्पकेशीचपरोपकरणेरतः । पितुर्मातुर्गुरूणांचभक्तोभूपतिव
ल्लभः । २ ।सभायांचतुरोनित्यंसंतुष्टोयेनकेनचित् । पीडास्यात्प्रथमेवर्षेतृतीयेऽग्निभयंदिशेत् । ३ ।विषूचिकाभ

यंविद्यात्सप्तमेनवमेऽन्यथा । दशमेरुधिरोद्रेकाद्द्वादशपतनंततः । ४ । सर्पाच्चषोडशेभीतिःपीडाचैकोनविंशके ।
पंचविंशमितेतोयाद्भयंभवतिनिश्चितम् । ५ । त्रिंशन्मितेतथापीडाद्वात्रिंशत्प्रमितेपिच । श्लेष्मलःशांतिभाक्शूरःसहि
ष्णुर्बुद्धिमान्नरः । ६ । सौम्यग्रहेक्षितेचंद्रेषण्णवत्यष्टसंख्यकम् । आयुर्जंतोर्विनिर्देश्यमवश्यंवचनात्सताम् । ७ ।
माघमासेनवम्यांचशुक्लपक्षेभृगोर्दिने । रोहिण्यांनिधनंविद्याज्जन्मनींदौवृषस्थिते । ८ । इतिवृषभराशिस्थितचंद्रेनि
र्याणम् । अथमिथुनस्थेचंद्रेनिर्याणम् । ग्रामण्यांचतुरःप्राज्ञोदृढसौहृदकारकः । मिष्टान्नाशीसुशीलश्चाछिन्नवाक्चललो
चनः । १ । कुटुंबवत्सलःकामीकुतूहलरतिप्रियः । वयसःपूर्वभागेतुसुखीमध्येतुमध्यमः । २ । चरमेतितरां
दुःखीद्विभार्योगुरुवत्सलः । स्वल्पापत्योगुणैर्युक्तोनरोभवतिनिश्चितम् । ३ । वृक्षाद्भीःपंचमेवर्षेषोडशेरिकृतंभयम् ।
अष्टादशप्रमाणेतुकर्णरुक्परिपीडनम् । ४ । विंशत्याप्रमितेवर्षेपीडात्यंतंप्रजायते । अष्टात्रिंशन्मितेनूनंपीडास्यान्मृ
त्युनासमा । ५ । भोगीदानरतोनित्यंसत्यधर्मपरायणः । सुभगोविषयासक्तोगीतनृत्यप्रियःसुधीः । ६ ।
शास्त्रज्ञःशुभवक्ताजीवेदशीतिंशरदांनरः । वैशाखेशुक्लपक्षेचद्वादश्यांबुधवासरे । ७ । माध्यान्हेहस्तनक्षत्रेनिर्या
णंखलुनिर्दिशेत् । इत्युक्तंमिथुनस्थेतुजन्मकालेकलानिधौ । ८ । इतिमिथुनराशिस्थेचंद्रेनिर्याणम् । अथकर्करा

शिरस्थेचंद्रेनिर्याणम् । परोपकृतिकर्ताचसर्वसंगृहतत्परः । पुत्रवान्गुणवान्साधुर्भक्तःपित्रोःस्त्रियाजितः ।१। अल्पायुःप्र
थमेभागेनिःस्वोमध्येसुखीभवेत् ।। तृतीयेधर्मसंसक्तस्तीर्थयात्रापरायणः । २ । रेखातस्यभवेन्नूनंललाटेमध्यगामिनी
वाम।गेग्निभयंविद्याच्छै षरुक्परिपीडितः । ३ । बांधवैर्बहुभिर्युक्तोबहुभार्यःप्रजायते । भगृहास्थितिवेत्ताचबहुमित्रःप्रियं
वदः ।४। रोगीस्यात्प्रथमेवर्षेतृतीयेलिंगपीडनम् । एकात्रिंशन्मितेवर्षेसर्पतोभयमादिशेत् । ५। द्वात्रिंशत्प्रमितेवर्षेबहुपी
डोद्भवोभवेत्।।पंचाशीतिमितंब्रूयादायुःषण्णवतिश्चवा ।६। माघेमासिसितेपक्षेनवम्यांभृगुवासरे । रोहिणीनामनक्षत्रेव्र
जेदायुः प्रपूर्णताम् ।७। प्रसूतौकर्करा।शिरस्थेकुमुदानंदनेसति।पुराणैर्मुनिभिःप्रोक्तंनिर्याणमितिनिश्चितं ।८। इतिकर्करा
शिरस्थचंद्रकृतनिर्याणं।अथसिंहराशिरस्थचंद्रकृतनिर्याणं।धनधान्यसमायुक्तःश्रीमांश्चसमरप्रियः ।विद्वान्सर्वकलाभिज्ञो
विदेशगमनेरतः ।१। विशालपिंगलाक्षश्चक्रोधीस्वल्पात्मजोनरः ।सर्वगःशत्रुहंताचाशिरोरुङ्निष्ठुरोमहान् ।२।भूताद्बा
धादिमेवर्षेपंचमेऽब्देऽग्नितोभयम्।सप्तमेज्वरबाधाचनृणांभवतिनिश्चितम्।३।विषूचिकोद्भवापीडानृणांभवतिनिश्चित
म् । विंशन्मितेभयंसर्पादेकविंशेप्रपीडनम्।४। अष्टाविंशन्मितेवर्षेचापवादभयान्वितःद्वात्रिंशत्प्रमितेनूनंवत्सरेपरिपीड
नम् ।५। उदरेसव्यभागेतुवातगुल्मादिसंभवः । सुशीलःकृपणोऽत्यंतंसत्यवादीविचक्षणः।६। शुभग्रहेक्षितेचंद्रेशतायुर्जा

यतेनरः॥फाल्गुनस्यासितेपक्षेपंचम्यांभौमवासरे ।७॥ मध्यान्हेजलमध्येचमृत्युर्नूनंनसंशयः। सिंहराशिस्थितेचंद्रेनिर्या
णमिदमीरितम् ।८। इतिसिंहराशिस्थितचंद्रेनिर्याणम्।अथकन्याराशिस्थेचंद्रेनिर्याणम्।स्वजनानंदकृन्नित्यंधनवान्बहु
सेवकः। प्रवासीचकलाभिज्ञोगुरुभक्तःप्रियंवदः ।१। देवताद्विजवर्याणांभक्तौतत्परमानसः । धर्मकर्मसमायुक्तोज
नानामतिदुर्लभः।२।कन्याल्पकत्वमापन्नोभूरिपुत्रोभवेन्नरः। शिश्नेकंठप्रदेशेचलांछनंनिश्चितंभवेत् ।३। वन्हिपीडातृ
तीयेब्देपंचमेलोचनव्यथा।नवमेद्वारबाधाचत्रयोदशमितेपिच ।४।तथापंचदशेवर्षेसर्पतोभयमादिशेत्। एकविंशन्मिते
वर्षेपतनंवृक्षभित्तितः।५। अरण्येशस्त्रघातःस्याद्वर्षेत्रिंशन्मितेध्रुवं। अशीत्यब्दंभवेदायुश्चंद्रेसौम्यग्रहेक्षिते।६। चैत्रेकृ
ष्णत्रयोदश्यांनिधनंरविवासरे। शीतद्युतौस्थितेसूतौकन्यायामितिसंस्मृतम्। इतिकन्याराशिस्थितेचंद्रेनिर्याणम्। अ
थतुलाराशिस्थितेचंद्रेनिर्याणम्। मान्यःसर्वजनैर्नूनंवस्तुसंग्रहतत्परः। भोगीधर्मपरःश्रीमान्बहुभृत्योविचक्षणः ।१।
वापीकूपतडागादिनिर्मितौसादरःसदा। प्राज्ञःसर्वकलाभिज्ञोनृपाणामतिवल्लभः।२। मधुरान्नरसप्रीतिर्द्विभार्यःपितृभ
क्तिकृत्। स्वल्पापत्योल्पबंधुश्चकृषिकर्मविचक्षणः।३। क्रयविक्रयसंप्राप्तिर्देवब्राह्मणपूजकः। भार्यावचोनुगामीचसप्त
मेब्देग्निजंभयम्।४। अष्टमेज्वरजापीडाद्वादशेचजलाद्भयम्। तरोस्तुरंगतःपातःसर्पभीर्वापिविंशके।५।एवंविंशन्मि

तेपीडाचंद्रेसौम्यग्रहेक्षिते । पंचाशीतिर्भवेदायुर्वैशाखस्याद्यपक्षके । ६ । सार्पेष्टम्यांभृगोर्वारेनिधनंपूर्वयामके । तुलारा
शिस्थितेचंद्रेनिर्याणमितिसूचितम् ।७। इतितुलाराशिस्थेचंद्रेनिर्याणम्। अथवृश्चिकराशिगतचंद्रकृतनिर्याणम्। परता
पकरःक्रोधीविद्वेषीकलहप्रियः । विश्वासघातकश्चापिमित्रद्रोहीविचक्षणः ।१। असंतुष्टोनृपैःपूज्योविघ्नकर्तान्यकर्माणि ।
शुभलक्षणसंयुक्तोगुप्तपापश्चविक्रमी ।२। बहुभृत्यश्चतुर्बंधुर्द्विभार्योजायतेपुमान् । प्रथमेऽब्देज्वरात्पीडातृतीयेभयम
ग्नितः । ३। पंचमेऽब्देज्वरात्पीडातथापंचदशेपिच । पंचविंशन्मितेवर्षेपीडास्यान्महतीध्रुवम् ।४। चंद्रेसौम्यग्रहैर्दृष्टेनवत्य
ब्दान्सजीवति । जेष्ठमासिसितेपक्षेदशम्यांबुधवासरे ।५। हस्तनक्षत्रसंयुक्तेमध्यरात्रेगतेसति । चंद्रेवृश्चिकराशिस्थे
निर्याणमितिकीर्तितम् । ६ । इतिवृश्चिकराशिस्थचंद्रकृतनिर्याणम् । अथधनुराशिस्थितचंद्रनिर्याणम् । प्राज्ञोधर्मी
सुपुत्रश्चराजमान्योजनप्रियः।द्विजदेवार्चनप्रीतिर्वस्तुसंग्रहतत्परः।१। सभायांचभवेद्वक्तासुनखीसुमतिःशुचिः । स्थूलदं
ताधरग्रीवःकाव्यकर्ताप्रगल्भकः । २ । कुलशीलीवदान्यश्चसभाग्योदृढसौहृदः । निम्नपादतलःक्लेशीसाहसीविनया
न्वितः । ।३। शांताक्षिप्रप्रकोपीचतापसःस्वल्पभुङ्नरः । स्वल्पापत्यःसुबंधुश्चपूर्ववयसिवित्तवान् ।४। सबाधःप्रथ
मेवर्षेमहापीडात्रयोदशे । अष्टषष्टिमितंप्राहुरायुर्वापंचसप्ततिः । ५। चंद्रेसर्वशुभैर्दृष्टेशतवर्षाणिजीवति । आषाढ

स्यासितेपक्षेपंचम्यांभृगुवासरे।६।निशायांहस्तनक्षत्रेनिधनंसर्वथाभवेत्। निर्याणमितिसंप्रोक्तंचंद्रेसूतौधनुस्थिते।
।७।इतिधनुराशिस्थितचंद्रकृतनिर्याणम्॥ अथमकरराशिस्थितचंद्रकृतनिर्याणम्। धीरोविचक्षणःक्लेशीपुत्रवानून्न
पतिप्रियः। कृपालुःसत्यसंपन्नोवदान्यःसुभगोलसः। १। कृष्णतालुःपुमान्नूनंविस्तीर्णकटिरुद्भवेत्। पंचमेवत्सरे
पीडासप्तमेचजलाद्भयम्। २। दशमेपतनंवृक्षाद्द्वादशेशस्त्रपीडनम्। विंशान्मितेज्वराद्बाधाशाखासुपंचविंशके। ३।
पंचत्रिंशत्समाकालेवामांगेग्निभयंदिशेत्। अब्दानांनवतिर्नूनमायुस्तस्यप्रकीर्तितम्। ४। श्रावणस्यासितेपक्षेदशम्यां
भौमवासरे। ज्येष्ठायांनिधनंनूनंचंद्रेमकरसंस्थिते। ५। इतिमकरराशिस्थितचंद्रकृतनिर्याणम्। अथकुंभरा०चंद्रेनि
र्याणम्। दातामिष्टान्नभोक्ताचधर्मकार्येषुसत्वरः। प्रियवक्तृत्वसंयुक्तोनरःक्षीणकलेवरः। १। स्वल्पापत्योद्विभार्यश्चका
मीद्रव्यविवर्जितः। वामहस्तेभवेल्लक्ष्मपीडाप्रथमवत्सरे। २। पंचमेग्निभयंविद्यादथद्वादशवत्सरे। व्यालाद्वाजलतो
भीतिरष्टाविंशतिमेक्षातिः। ३। चौरेभ्यश्चभवेदायुर्वर्षाणांनवतिर्ध्रुवम्। भाद्रेमास्यसितेपक्षेचतुर्थ्यांशनिवासरे। ४।
भरणीनामनक्षत्रेगृणंतिमरणंनृणाम्। एवमुक्तंमुनिश्रेष्ठैश्चंद्रेजन्मनिकुंभगे। ५। इतिकुंभराशिगतचंद्रकृतनिर्याण
म्। अथमीनराशौचंद्रकृतनिर्याणम्। धनीमानीविनीतश्चभोगीसंहृष्टमानसः। पितृमातृसुराचार्यगुरुभक्तिपरोनरः

।१।उदारोरूपवान्श्रेष्ठोगंधमाल्यविभूषणः।पंचमेऽब्देजलाद्भीतिरष्टमेज्वरपीडनम्।२।द्वाविंशेमहतीपीडाचतुर्विंश
मितेऽब्दके।पूर्वांशागमनंचायुरब्दानांनवतिःस्मृता।३। आश्विनस्यासितेपक्षेद्वितीयायांगुरोर्दिने। कृत्तिकाना
मनक्षत्रेसायंमृत्युर्नसंशयः।४।इतीरितंतुनिर्याणंयवनाचार्यसंमतम्।मीनस्थेयामिनीनाथेभवेदत्रनसंशयः ।५।
इतिमीनस्थचंद्रकृतनिर्याणम्॥इतिश्रीदैवज्ञढुंढिराजविरचितेजातकाभरणेनिर्याणाध्यायः। अथस्त्रीजातकाध्यायः॥
यज्जन्मकालाद्गदितंनराणांहोराप्रवीणैःफलमेतदेव।स्त्रीणांप्रकल्प्यंखलुचेदयोग्यंतन्नायकेतत्परिवेदितव्यम् ।१।ल
ग्नेशशांकेचवपुर्विचिंत्यंतयोःकलत्रेपतिवैभवानि।सुताख्यभावेप्रसवोऽवगम्योवैधव्यमस्याःकिलकालगेहे ।२। ल
ग्नेचचंद्रेसमराशियातेकांतानितांतंप्रकृतिस्थितास्यात्।सद्रत्नभूषासहिताथसौम्यैर्निरीक्षितौतौयदिचारुशीला।३।
तयोःस्थितिश्चेद्विषमाख्यराशौनारीनराकारधराकुरूपा।पापग्रहालोकनयोगयातौतौचेत्कुशीलागुणवर्जितालम्।४
लग्नेंद्वोर्बलवान्कुजस्यभवनेशुक्रस्यखाग्न्यंशकेकन्यास्यादतिनिंदितासुरगुरोःसाध्वीनितांतंभवेत्।दुष्टाभूतनयस्यनून
मुदितासौम्यस्यमायाविनीदासीतिग्ममरीचिसूनुगगनाग्न्यंशेफलानिक्रमात्।५।तारानायकपुत्रभेऽवनिसुतात्रिंशल्लवे
कापटाशौक्रेहीनमनोभवाशशिसुतस्यातीवयुक्तागुणैःदेवाधीशपुरोहितस्याहिभवेत्साध्वीनितांतंतथाखाग्न्यंशेर्कसुतस्य

सानिगदिताक्लीबस्यभार्याबुधैः ।६। देवाचार्यगृहेमृतांशुरथवालग्नेखवन्ह्यंशकेभूसूनोर्गुणशालिनीसुरगुरोःस्यात्तागुणा
नांगणैः। तारास्वामिसुतस्यचारुविभवाशुक्रस्यसाध्वीभवेन्नूनंभानुसुतस्यचाल्पसुरताकांताबुधैःकीर्तिता ।७।दैत्याचा
र्यगृहेसुरेंद्रसचिवस्याकाशवन्ह्यंशकेलग्नेवाप्युडुनायकोगुणवतीभौमस्यदौष्ट्याधिका ।सौम्यस्यातिकलाकलापकुशला
शुक्रस्यचंचद्गुणैर्युक्ताद्यैर्निपुणैर्दिवामणिसुतस्यांशेपुनर्भूरिति। ८।मंदालयेखाग्निलवेकुजस्यदासीचसौम्यस्यखलाहिबा
ला। बृहस्पतेःस्यात्पतिदेवतासावंध्याभृगोर्नीचरतार्कसूनोः ।९। लग्नेवाविधुरर्कमंदिरगतोभौमस्यखाग्न्यंशकेस्वेच्छासं
चरणोद्यताशशिसुतस्यातीवदुष्टाशया। देवाधीशपुरोधसोनिगदितासाराजपत्नीभृगोःपौंश्चल्याभिरताशनेरातितरांपुं
वत्प्रगल्भांगना ।१०। चंद्रागारेखाग्निभागेकुजस्यस्वेच्छावृत्तिर्यस्याशिल्पेप्रवीणा । वाचांपत्युःसद्गुणाभार्गवस्य
साध्वीमंदस्याप्रियप्राणहंत्री। ११। अन्योन्यभागेक्षणगौसितार्कीयद्वासितर्क्षेतनुगेघटांशे । कंदर्पशांतिंकुरुतोनितांतं
नारीनराकारकरांगनाभिः। १२ ।शून्येमन्मथमंदिरेशुभखगैर्नालोकितेनिर्बलेबालायाःकिलनायकोमुनिवरैःकापूरुषः
कीर्तितः।जामित्रंबुधमंदयोर्यदिगृहंषंडोभवेन्निश्चितंराशौतत्रचरेविदेशनिरतोऽव्यंगेचामिश्रास्थितिः। १३।सप्तमेदिनप
तौपतिमुक्ताक्षोणिजेचविधवाखलुबाल्ये। पापखेचरविलोकनयातमंदगेचयुवतिर्जरतीस्यात्। १४। खलैःकलत्रेचग

तालकास्यात्कांताविमिश्रैश्चभवेत्पुनर्भूः। कलत्रसंस्थेविबलेखलाख्येसौम्यैरदृष्टेविभुनाविमुक्ता। १५। अन्योन्यांशाव
स्थितौभौमशुक्रौस्यातांकांतासंगतान्येननूनम्। चंद्रोपेतौशुक्रवक्रौस्मरस्थावाज्ञेवस्यात्स्वामिनश्चामनंति। १६। लग्नेसि
तेंदूकुजमंदभस्थौक्रूरेक्षितौसान्यरताजवन्या। स्मरेकुजेसार्कसुतेनदृष्टेविनष्टयोनिश्चशुभाशुभांगे। १७। भानौभेयदिवा
लवःस्मरगृहेसंभोगमंदःपतिश्चंद्रस्यातिमदोमृदुःक्षितिसुतस्यस्त्रीप्रियःक्रोधयुक्। विद्वान्ज्ञस्यगुरोर्वशीगुणयुतःशुक्रस्य
भाग्यान्वितोमंदस्यप्रवयास्तुगूढमतिरित्युक्तोबुधैर्होरिकैः। १८। शुक्रेंदूस्मरगौस्त्रियंप्रकुरुतःसेर्ष्यांसुखेनान्वितांसौम्यें
दूचकलासुखोत्तमगुणांशुक्रेंदुपुत्रावथ। चंचद्भाग्यकलाज्ञताभिरुचिरांसौम्यग्रहेंद्रास्तनौनानाभूषणसद्गुणांबरसुखांपा
पग्रहैस्त्वन्यथा। १९। वैधव्यंस्यात्पापखेटेऽष्टमस्थेरंध्रस्वामीसंस्थितोयस्यचांशे। मृत्युःपाकेतस्यवाच्योऽगनायाःसौम्यै
रर्थस्थानगैःस्यात्स्वयंहि। २०। सूर्यारौखजलाश्रितौहिमवतःशैलाग्रपातान्मृतिर्भौमेंद्वर्कसुताःखसप्तजलगाःस्यात्कूप
वाप्यादितः। सूर्याचंद्रमसौखलेक्षितयुतौकन्यास्थितौबंधनात्तौचेद्व्यंगविलग्नसंस्थितिकरौतोयेविलग्नाःस्वतः। २१। र
विसुतोयदिकर्कमुपागतोहिमकरोमकरोपगतोभवेत्। किलजलोदरसंजनितातदानिधनतावनितासुचकीर्तिता। २२। नि
शाकरःपापखगांतरस्थःशस्त्राग्निमृत्युंकुजभेकरोति। पापेस्मरस्थेन्यखगेचधर्मेकिलांगनाप्रव्राजितत्वमेति २३ कन्यालिग्ने

सिंहगतेशशांकेपंकेरुहाक्षीखलुसाल्पपुत्रा। पुत्रालयंचेत्खलुखेचरैर्दृष्टंयुतंवाबहुताचतेषाम् । २४ । शुक्रेंदुसौम्या
विबलाभवेयुःशनैश्चरोमध्यबलोयदिस्यात् । शेषःसवीर्याविषमेचलग्नेयोषाविशेषात्पुरुषप्रगल्भा। २५ ।समेविल
ग्नेयदिसंस्थिताःस्युर्बलान्विताःशुक्रबुधेंदुजीवाः । स्यात्कामिनीब्रह्मविचारचर्चापरागमज्ञानविराजमाना । २६ ।
पूर्वैर्यन्मुनिभिःसविस्तरतयास्त्रीजातकंकीर्तितंसम्यग्वाप्यशुभंचयन्मतिमताबाच्यंविदित्वाबलम् ।योगानांचनियोजये
त्फलमिदंपृच्छाविलग्नेतथापाणिग्रहणेतथाचवरणेसंभूतिकालेपिच।२७।नारीचक्रेमस्तकेत्रीणिभानिवक्त्रेभानांसप्तकं
स्थापनीयम्। प्रत्येकंस्युर्वेदताराउरोजेतिस्रस्तारात्दृत्प्रदेशेनिवेश्याः। २८ ।नाभौदेयंभत्रयंत्रीणिगुह्येभानोर्धिष्ण्या
च्चंद्रधिष्ण्यावधीत्थम् । सत्संतापःशीर्षभेवक्त्रसंस्थेनित्यंमिष्टान्नानिसौख्योलब्धिः । २९ । कामंस्वामिप्रेमवृद्धिस्त
नस्थेवक्षोदेशावस्थितेऽत्यंतहर्षः। पत्युर्हिंचतानंतवृद्धिश्चनाभौगुह्यस्थेस्यान्मन्मथाधिक्यमुच्चैः । ३०।गोदावरीतीर
विराजमानंपार्थाभिधानंपुटभेदनंयत्। सद्गोलविद्यामलकीर्तिभाजांमत्पूर्वजानांवसतिस्थलंतत् । ३१। तत्रत्यदैवज्ञ
नृसिंहसूनुर्गजाननाराधनजाभिमानःश्रीढुंढिराजोरचयांबभूवहोरागमेनुक्रममादरेण।३२।इतिश्रीदैवज्ञढुंढिराजविर
चितजातकाभरणस्त्रीजातकाध्यायः ॥ ॥ इतिजातकाभरणंसमाप्तिमगमत् ॥ ॥समाप्तोयं ग्रन्थः ॥

